10000

श्रीरस्तु दशमप्रपाठकः काठक भागप्रारम्भः हरिः ओम्।

10101

सं॒ज्ञानं॑व्वि॒ज्ञानं॑ प्र॒ज्ञानं॑ञ्ज्ञानद॑भिजा॒नत्।

स॒ङ्कल्प॑मानं प्र॒कल्प॑मानमुप॒कल्प॑माना॒मुप॑क्लृप्तङ्क्लृ॒प्तम्।

श्रेयो॒ वसी॑य आ॒यथ्सम्भू॑तम्भू॒तम्। चि॒त्रः के॒तुः

प्र॒भाना॒भान्थ्स॒म्भान्। ज्योति॑ष्मा॒ꣳ स्तेज॑स्वाना॒तप॒

स्तप॑न्नभि॒तप॑न्न्। रो॒च॒नो रोच॑मानश्शोभ॒नश्शोभ॑मानः क॒ल्याणः॑।

द॒र्शा॑ दृ॒ष्टा द॑र्श॒ता वि॒श्वरू॑पा सुद॒र्श॒ना।

आ॒प्याय॑माना॒प्याय॑माना॒प्याया॑ सू॒नृतेरा॑।

आ॒पूर्य॑माणा॒ पूर्य॑माणा पू॒रय॑न्ती पू॒र्णा पौ॑र्णमा॒सी।

दा॒ता प्र॑दा॒ताऽऽन॒न्दो मोद॑ः प्र॒मो॒दः ।।1।।

10102

आ॒वे॒शय॑न्नि

वे॒शय॑न्थ्सं॒व्वेश॑न॒स्सꣳ शा॑न्तश्शा॒न्तः।

आ॒ भव॑न्प्रभव॑न्थ्स॒म्भव॒न्थ्सम्भू॑तो भू॒तः।

प्रस्तु॑तं॒ व्विष्टु॑त॒ꣳ सस्तु॑तङ्क॒ल्याणं॑व्वि॒श्वरू॑पम्।

शु॒क्रम॒मृत॑न्तेज॒स्वि तेज॒स्समि॑द्धम्।

अ॒रु॒णम्भा॑नु॒मन्मरी॑चिमदभि॒तप॒त्तप॑स्वत्। स॒वि॒ता

प्र॑सवि॒ता दी॒प्तो दी॒पय॒न्दीप्य॑मानः। ज्वल॑ञ्ज्वलि॒ता

तप॑न्वि॒तप॑न्थ्स॒न्तपन्न्। रो॒च॒नो

रोच॑मानश्शु॒म्भूश्शुम्भ॑मानो वा॒मः। सु॒ता सु॑न्व॒ती

प्रसु॑ता सू॒यमा॑नाऽभिषू॒यमा॑णा। पीती॑ प्र॒पा सं॒पा

तृ॒प्तिस्त॒र्पय॑न्ती ।।2।।

10103

का॒न्ताका॒म्या का॒मजा॒ताऽऽयु॑ष्मती काम॒दुघा॑।

अ॒भि॒शा॒स्तानु॑म॒न्ताऽऽन॒न्दो

मोद॑ः प्र॒मो॒दः। आ॒सा॒दय॑न्निषा॒दय॑न्थ्स॒ꣳ

साद॑न॒स्सꣳस॑न्नस्स॒न्नः।

आ॒भूर्वि॒भूः प्र॒भूश्श॒म्भूर्भुव॑ः। प॒वित्रं॑

पवयि॒ष्यन्पू॒तो मेध्य॑ः।

यशो यशस्वानायुरमृतः। जीवो जीविष्यन्थ्स्वर्गो

लोकः। सहस्वान्थ्सहीयानोजस्वान्थ्सहमानः।

जयन्नभियनँन्थ्सुद्रविणो

द्रविणोदाः। आर्द्रपवित्रो हरिकेशो मोदः प्रमोदः।।3।।

10104

अरुणोऽरुणरजाः पुण्डरीको विश्वजिदभिजित्।

आर्द्रः पिन्वमानोऽन्नवान्रसवानिरावान्।

सर्वौषधस्सम्भरो महस्वान्।

एजत्काजोवत्काः। खुल्लकाश्शिपिविष्टकाः।

सरिस्रास्सुशेरवः। अजिरासो गमिष्णवः।

इदानीँन्तदानीमेतर्हि क्षिप्रमजिरम्। आशुर्निमेषः

फणो द्रवन्नतिद्रवन्। त्वर स्त्वरमाण

आशुराशीयाञ्जवः। अग्निष्टोम उक्थ्योतिरात्रो

द्विरात्रस्त्रिरात्रश्चतूरात्रः। अग्निर्ऋतुस्सूर्य

ऋतुश्चन्द्रमा ऋतुः। प्रजापतिस्सव्वँथ्सरो महान्कः ।।4।।

10100

प्रमोदस्तर्पयन्ती प्रमोदो जवस्त्रीणि च ।।1।।

10201

भूरग्निञ्च पृथिवीञ्च माञ्च। त्रीꣳश्च

लोकान्थ्सव्वँथ्सरञ्च।

प्रजापतिस्त्वा सादयतु। तया

देवतयाऽङ्गिरस्वद्ध्रुवा सीद।

भुवो वायुञ्चान्तरिक्षञ्च माञ्च।

त्रीꣳश्च लोकान्थ्सव्वँथ्सरञ्च। प्रजापतिस्त्वा

सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ।

स्वरादित्यञ्च दिवञ्च माञ्च। त्रीꣳऽश्च

लोकान्थ्सव्वँथ्सरञ्च। प्रजापतिस्त्वा

सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद।

भूर्भुवस्स्वश्चन्द्रमसञ्च दिशश्च माञ्च।

त्रीꣳश्च लोकान्थ्सव्वँथ्सरञ्च।

प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ।।5।।

10200
स॒व्वँ॒थ्स॒रश्च॒ षट्च॑ ।।2।।
10301
त्वमे॒व त्वांव्वे॑त्थ॒ योऽसि॒ सोऽसि॑। त्वमे॒व
त्वाम॑चैषीः। चि॒तश्चासि॒ सञ्चि॑तश्चास्यग्ने। ए॒ताव॒ाꣳश्चासि॒
भूयाꣳ॑श्चास्यग्ने। यत्ते॑ अग्ने॒ न्यू॑न॒य्यँदु॒ तेऽति॑रिक्तम्।
आ॒दि॒त्यास्तदङ्गि॑रसश्चिन्वन्तु। विश्वे॑ ते
दे॒वाश्चिति॒माप॑ूरयन्तु। चि॒तश्चासि॒ सञ्चि॑तश्चास्यग्ने।
ए॒ताव॒ाꣳश्चासि॒ भूयाꣳ॑श्चास्यग्ने। मा ते॑ अग्ने च॒ येन॒
माऽति॑ च॒येनायु॒राव॑ृक्षि। सर्वे॑षा॒ञ्ज्योति॑षा॒ञ्ज्योति॒र्यद॒दाव॒ुदेति॑। तप॑सो
जा॒तमनि॑भृष्टमोज॑ः। तत्ते॒ ज्योति॑रिष्टके। तेन॑ मे तप। तेन॑ मे ज्वल। तेन॑ मे
दीदिहि। याव॑द्दे॒वाः। याव॒दसा॑ति॒ सूर्यः॑। याव॑दु॒ताऽपि॒ ब्रह्म॑ ।।6।।
10300
वृ॒क्षि॒ नव॑ च ।।3।।
10401
स॒व्वँ॒थ्स॒रोऽसि परिवथ्स॒रोऽसि।
इ॒दा॒व॒थ्स॒रोऽसीदुवथ्स॒रोऽसि। इ॒द्व॒थ्स॒रोऽसि
वथ्स॒रोऽसि। तस्य॑ ते वस॒न्तश्शिर॑ः। ग्री॒ष्मो दक्षि॑णꣳ
प॒क्षः। व॒र्षाꣳ पुच्छ॑म्। श॒रदुत्त॑रꣳ प॒क्षः। हे॒म॒न्तो मध्य॑म्।
पू॒र्व॒प॒क्षाश्चित॑यः। अ॒प॒र॒प॒क्षाꣳ पुरी॑षम् ।।7।।
10402
अ॒हो॒रा॒त्राणीष्ट॑काः। ऋ॒ष॒भोऽसि स्व॒र्गो लो॒कः। यस्या॒न्दि॒शि
म॒हीय॑से। ततो॑ नो॒ मह॒ आव॑ह। वा॒युर्भू॒त्वा सर्वा॒ दिश॒ आवा॑हि।
सर्वा॒ दिशोऽनु॒ विवा॑हि। सर्वा॒ दिशोऽनु॒ सव्वा॑हि। चित्या॒ चिति॒माप॑ृण।
अचि॑त्या॒ चिति॒माप॑ृण। चिद॑सि समु॒द्रयो॑निः ।।8।।
10403
इन्दु॒र्दक्ष॑श्श्ये॒न ऋ॒तावा॑। हिर॑ण्यपक्षश्शकु॒नो भु॒र॒ण्युः। म॒हान्थ्स॒धस्थे॑ ध्रुव
आनिष॑त्तः। नम॑स्ते अस्तु॒ मा मा॑ हिꣳसीः। एति॒ प्रेति॒ वीति॒ समित्युदिति॑। दिव॑म्मे
यच्छ। अ॒न्तरि॑क्षम्मे यच्छ। पृ॒थि॒वीम्मे॑ यच्छ। पृ॒थि॒वीम्मे॑ यच्छ।
अ॒न्तरि॑क्षम्मे यच्छ। दिव॑म्मे यच्छ। अह्ना॒ प्रसा॑रय। रात्र्या॒ सम॑च। रात्र्या॒ प्रसा॑रय।
अह्ना॒ सम॑च। काम॒ं प्रसा॑रय। काम॒ꣳ सम॑च ।।9।।
10400

पुरीषꣳ समुद्रयोनिꣳ पृथिवीम्मे यच्छान्तरिक्खम्मे यच्छ सप्त च ।।4।।
10501
भूर्भुवस्स्वः। ओजो बलम्। ब्रह्म ख्षत्रम्। यशो महत्। सत्यन्तपो नाम। रूपममृतम्।
चख्षुश्श्रोत्रम्। मन आयुः। विश्वँय्यशो महः। समन्तपो हरो भाः। जातवेदा
यदि वा पावकोसि। वैश्वानरो यदि वा वैद्युतोसि। शं प्रजाभ्यो
यजमानाय लोकम्। ऊर्जं पुष्टिन् ददद्भ्यावृथ्स्व ।।10।। ]
10500
भाश्चत्वारि च ।।5।।
10601
राज्ञी विराज्ञी। सम्राज्ञी स्वराज्ञी।
अर्चिश्शोचिः। तपो हरो भाः। अग्निरिन्द्रो
बृहस्पतिः। विश्वे देवा भुवनस्य गोपाः। ते मा सर्वे
यशसा सꣳसृजन्तु ।।11।।
10600
राज्ञीन्द्रो मा सप्त ।।6।।
10701
असवे स्वाहा वसवे स्वाहा। विभुवे स्वाहा विवस्वते
स्वाहा। अभिभुवे स्वाहाऽधिपतये स्वाहा। दिवां पतये
स्वाहाꣳहस्पत्याय स्वाहा।
चाख्षुष्मत्याय स्वाहा ज्योतिष्मत्याय स्वाहा।
राज्ञे स्वाहा विराज्ञे
स्वाहा। सम्राज्ञे स्वाहा स्वराज्ञे स्वाहा। शूषाय
स्वाहा सूर्याय स्वाहा। चन्द्रमसे स्वाहा
ज्योतिषे स्वाहा। सꣳसर्पाय स्वाहा कल्याणाय
स्वाहा। अर्जुनाय स्वाहा ।।12।।
10700
कल्याणाय स्वाहैकञ्च ।।7।।
10801
विपश्चिते पवमानाय गायत । मही न धाराऽत्यन्धो अर्षति ।
अहिर्ह जीर्णामतिसर्पति त्वचम् । अत्यो न क्रीडन्नसरद्वृषा
हरिः । उपयामगृहीतोऽसि मृत्यवे त्वा जुष्टङ्गृह्णामि । एष
ते योनिर्मृत्यवे त्वा । अप मृत्युमप ख्षुधम् ।

अपे॒तश्श॒पथ॑ञ्जहि। अधा॑ नो अग्न॒ आव॑ह ।
रा॒यस्पोषꣳ॑ सह॒स्रिण᳚म् ।। 13 ।।
10802
ये ते॑ स॒हस्र॑म॒युतं॒
पाशा᳚ः । मृत्यो॒ मर्त्या॑य॒ हन्त॑वे। तान् य॒ज्ञस्य॑ मा॒यया᳚ ।
सर्वा॒नव॑यजामहे । भ॒ख्षो᳚ऽस्यमृतभ॒ख्षः। तस्य॑ ते
मृत्यु॒पी॑तस्या॒मृत॑वतः । स्व॒गाकृ॑तस्य॒
मधु॑मतः । उप॑हूत॒स्योप॑हूतो भख्षयामि । म॒न्द्राऽभिभू॑तिः
के॒तुर्य॒ज्ञाना॒ँव्वाक् । असा॒वेहि॑ ।। 14 ।।
10803
अ॒न्धो जागृ॑विःप्राण । असा॒वेहि॑ । ब॒धि॒र आ᳚क्रन्दयितरपान । असा॒वेहि॑ ।
अ॒ह॒स्तोस्त्वा॒ चख्षु॑ः । असा॒वेहि॑ । अ॒पा॒दाशो॒
मन॑ः । असा॒वेहि॑ । कवे॒ विप्र॑चित्ते॒ श्रोत्र॑ । असा॒वेहि॑ ।। 15 ।।
10804
सु॒ह॒स्तस्सु॑वा॒सासः । शू॒षो नामा᳚स्य॒मृतो॒ मर्त्ये॑षु ।
तन्त्वा॒ऽहन्तथा॒ वेद॑ । असा॒वेहि॑ । अ॒ग्निर्मे॑ वा॒चि श्रि॒तः ।
वाग्घृद॑ये । हृद॑य॒म्मयि॑ । अ॒हम॒मृते᳚ ।
अ॒मृत॒म्ब्रह्म॑णि । वा॒युर्मे᳚ प्रा॒णे श्रि॒तः ।। 16 ।।
10805
प्रा॒णो हृद॑ये । हृद॑य॒म्मयि॑ । अ॒हम॒मृते᳚ । अ॒मृत॒म्ब्रह्म॑णि ।
सूर्यो॑ मे॒ चख्षु॑षि श्रि॒तः । चख्षु॒र्॒ हृद॑ये । हृद॑य॒म्मयि॑ ।
अ॒हम॒मृते᳚ । अ॒मृत॒म्ब्रह्म॑णि । च॒न्द्रमा॑ मे॒ मन॑सि श्रि॒तः ।। 17 ।।
10806
मनो॒ हृद॑ये । हृद॑य॒म्मयि॑ । अ॒हम॒मृते᳚ ।
अ॒मृत॒म्ब्रह्म॑णि । दिशो॑ मे॒ श्रोत्रे᳚ श्रि॒ताः। श्रोत्र॒ꣳ॒
हृद॑ये । हृद॑य॒म्मयि॑ । अ॒हम॒मृते᳚ । अ॒मृत॒म्ब्रह्म॑णि ।
आपो॑ मे॒ रेत॑सि श्रि॒ताः ।।18।।
10807
रेतो॒ हृद॑ये । हृद॑य॒म्मयि॑ ।
अ॒हम॒मृते᳚ । अ॒मृत॒म्ब्रह्म॑णि । पृ॒थि॒वी मे॒ शरी॑रे श्रि॒ता ।
शरी॑र॒ꣳ॒ हृद॑ये । हृद॑य॒म्मयि॑ । अ॒हम॒मृते᳚ ।
अ॒मृत॒म्ब्रह्म॑णि । ओ॒ष॒धि॒व॒न॒स्प॒तयो॑ मे॒ लोम॑सु

श्रि॒ताः ।। 19 ।।
10808
लोमा॑नि॒ हृद॑ये । हृद॑य॒म्मयि॑ । अ॒हम॒मृते᳚ ।
अ॒मृत॒म्ब्रह्म॑णि । इन्द्रो॑ मे॒ बले᳚ श्रि॒तः । बल॒ꣳ॒ हृद॑ये ।
हृद॑य॒म्मयि॑ । अ॒हम॒मृते᳚ । अ॒मृत॒म्ब्रह्म॑णि । प॒र्जन्यो॑ मे
मू॒र्ध्नि श्रि॒तः ।। 20 ।।
10809
मू॒र्धा हृद॑ये । हृद॑य॒म्मयि॑ ।
अ॒हम॒मृते᳚ । अ॒मृत॒म्ब्रह्म॑णि । ईशा॑नो मे म॒न्यौ श्रि॒तः ।
म॒न्युर् हृद॑ये । हृद॑य॒म्मयि॑ । अ॒हम॒मृते᳚ । अ॒मृत॒म्ब्रह्म॑णि ।
आ॒त्मा म॑ आ॒त्मनि॑ श्रि॒तः ।। 21 ।।
10810
आ॒त्मा हृद॑ये । हृद॑य॒म्मयि॑ ।
अ॒हम॒मृते᳚ । अ॒मृत॒म्ब्रह्म॑णि । पुन॑र्म आ॒त्मा
पुन॒रायु॒रागा᳚त् । पुन॒॑ᳲ प्रा॒णᳲ॒ पुन॒राकू॒॑त॒मागा᳚त् ।
वै॒श्वा॒न॒रो र॒श्मिभि॑र्वावृ॒धा॒नः । अ॒न्तस्ति॑ष्ठत्व॒मृत॑स्य
गो॒पाः ।। 22 ।।
10800
स॒ह॒स्रि॒ण॑मिहि॒ श्रोत्रासा॒वेहि॑ प्रा॒णे श्रि॒तो मन॑सि
श्रि॒तो रेत॑सि श्रि॒ता लोम॑सु श्रि॒ता मू॒र्ध्नि श्रि॒त आ॒त्मनि॑
श्रि॒तो᳚ऽष्टौ च॑ ।।8।।
10901
अ॒ग्निर्वा॒युस्सूर्य॑श्च॒न्द्रमा॒ दिश॒ आप॑ः पृथि॒व्यो॑षधिवनस्प॒तय॒
इन्द्र॑ः प॒र्जन्य॒ ईशा॑न आ॒त्मा पुन॑र्मे॒ त्रयो॑दश ।
प्र॒जाप॑तिर्दे॒वान॑सृजत। ते पा॒प्मना॒ सन्दि॑ता॒ अजायन्त।
तान्व्य॑द्यत्।
यद्व्य॒द्यत्। तस्मा᳚द्विद्यु॒त्। तम॑वृश्चत्। यदवृ॑श्चत्।
तस्मा॒द्वृष्टि॑ः। तस्मा॒द्यत्रै॒ते दे॒वते॑ अभि॒प्राप्नु॑तः। वि च॑
है॒वास्य॒ तत्र॑ पा॒प्मान॒न्द्यत॑ः ।।23।।
10902
वृ॒श्चत॑श्च। सैषा
मी॑मा॒ꣳ॒साऽग्नि॑हो॒त्र ए॒व स॑म्पन्ना। अथो॑ आहुः।

सर्वेषु यज्ञक्रतुष्विति। होष्यन्नप उपस्पृशेत्।
विद्युदसि विद्य मे पाप्मानमिति।
अथ हुत्वोपस्पृशेत्। वृष्टिरसि वृश्च मे
पाप्मानमिति। यक्ष्यमाणो वेष्ट्वा वा। वि च हैवास्यैते
देवते पाप्मानन्द्यतः ।।24।।
10903
वृश्चतश्च। अत्यꣳहो
हारुणिः।
ब्रह्मचारिणे प्रश्नान्प्रोच्य प्रजिघाय। परेहि।
प्लक्षन्दैयाम्पातिम्पृच्छ।
वेत्थ सावित्रा 3 न्न वेत्था 3 इति। तमागत्य पप्रच्छ।
आचार्यो मा प्राहैषीत्।
वेत्थ सावित्रा 3 न्न वेत्था 3 इति। स होवाच वेदेति ।।25।।
10904
स कस्मिन्प्रतिष्ठित इति।
परोरजसीति। कस्तद्यत्परोरजा इति। एष वाव स
परोरजा इति होवाच।
य एष तपति। एषोऽवाग्रजा इति। स कस्मिन्न्वेष
इति। सत्य इति। किन्तथ्सत्यमिति। तप इति ।।26।।
10905
कस्मिन्नु तप इति। बल इति। किन्तद्बलमिति। प्राण इति। मा स्म
प्राणमति पृच्छ इति माऽऽचार्योऽब्रवीदिति होवाच ब्रह्मचारी।
स होवाच प्लक्षो दैयाम्पातिः। यद्वै ब्रह्मचारिन्प्राणमत्यप्रक्ष्यः।
मूर्धा ते व्यपतिष्यत्। अहमु त आचार्याच्छ्रेयान्भविष्यामि।
यो मा सावित्रे समवादिष्टेति ।।27।।
10906
तस्माथ्सावित्रे न सँव्वदेत। स यो ह वै सावित्रँव्विदुषा
सावित्रे सँव्वदते। सहास्मिञ्छ्रियन्दधाति। अनु ह वा अस्मा
असौ तपञ्छ्रियं मन्यते।
अन्वस्मै श्रीस्तपो मन्यते। अन्वस्मै तपो बलं मन्यते।
अन्वस्मै बलं प्राणं मन्यते। स यदाह। संज्ञानँव्विज्ञान

न्दर्॒शा॑ द्॒ष्टेति॑। ए॒ष ए॒व तत् ।।28।।
10907
ए॒ष ह्ये॑व तान्यहा॑नि।
ए॒ष रात्र॑यः। अथ॒ यदाह॑। चि॒त्रः के॒तुर्दा॒ता प्र॑दा॒ता
स॑वि॒ता प्र॑सवि॒ताऽभि॑शा॒स्ताऽनु॑म॒न्तेति॑। ए॒ष ए॒व तत्। ए॒ष
ह्ये॑व तेऽह्नो॑ मुहू॒र्ताः। ए॒ष रात्रेः॑ ।।29।।
10908
अथ॒ यदाह॑। प॒वित्र॑म्पवयि॒ष्यन्थ्सह॑स्वा॒न्थ्सही॑यानरु॒णो॑ऽरु॒णर॑जा॒ इ॑ति।
ए॒ष ए॒व तत्। ए॒ष ह्ये॑व ते॑ऽर्धमा॒साः। ए॒ष मासाः॑। अथ॒
यदाह॑। अ॒ग्नि॒ष्टो॒म उ॒क्थ्यो॑ऽग्निर्ऋ॒तुः
प्र॒जाप॑तिस्सँव्वथ्स॒र इ॑ति। ए॒ष ए॒व तत्। ए॒ष ह्ये॑व ते
य॑ज्ञक्र॒तवः॑। ए॒ष ऋ॒तवः॑ ।।30।।
10909
ए॒ष सँव्वथ्स॒रः। अथ॒
यदाह॑। इ॒दानीं॑न्त॒दानी॒मिति॑। ए॒ष ए॒व तत्। ए॒ष ह्ये॑व ते
मु॑हू॒र्ताना॑म्मुहू॒र्ताः। ज॒न॒को ह॒ वैदे॑हः। अ॒हो॒रा॒त्रै
स्स॒माज॑गाम। तꣳ हो॑चुः। यो वा अ॒स्मान्
वेद॑। वि॒ज॑हत्पा॒प्मान॑मेति ।।31।।
10910
सर्व॒मायु॑रेति। अ॒भि स्व॒र्गँल्लो॒कञ्ज॑यति।
नास्या॒मु॒ष्मिँ॑ल्लो॒केऽन्नं॑ङ्ख्षीयत॒ इति॑। वि॒जह॑द्ध वै
पा॒प्मान॑मेति। सर्व॒मायु॑रेति । अ॒भि स्व॒र्गँल्लो॒कञ्ज॑यति ।
नास्या॒मु॒ष्मिल्लो॒केऽन्नं॑ङ्ख्षीयते। य ए॒वँव्वेद॑। अही॑ना॒
हाश्व॑त्थ्यः। सा॒वि॒त्रँव्वि॒दाञ्च॑कार ।।32।।
10911
स ह॑ ह॒ꣳसो हि॑र॒ण्मयो॑ भू॒त्वा। स्व॒र्गँल्लो॒कमि॑याय।
आ॒दि॒त्यस्य॒ सायु॑ज्यम्। ह॒ꣳऽसो ह॒ वै हि॑र॒ण्मयो॑
भू॒त्वा। स्व॒र्गँ ल्लो॒कमे॑ति।
आ॒दि॒त्यस्य॒ सायु॑ज्यम्। य ए॒वँ व्वेद॑। दे॒व॒भा॒गो ह॑
श्रौत॒र्॒षः। सा॒वि॒त्रँव्वि॒दाञ्च॑कार। तꣳह॒ वाग॑दृश्यमा॒नाऽ
भ्यु॑वाच ।।33।।
10912

सर्वम्बत गौतमो वेद। यस्सावित्रँव्वेदेति।
स होवाच। कैषा वागसीति। अयमहꣳ
सावित्रः। देवानामुत्तमो लोकः। गुह्यं महो
बिभ्रदिति। एतावति ह गौतमः। यज्ञोपवीतङ्कृत्वाऽधो निपपात।
नमो नम इति ।।34।।
10913
स होवाच। मा भैषीर्गौतम। जितो वै ते लोक
इति। तस्माद्ये के च सावित्रँव्विदुः। सर्वे ते जितलोकाः। स यो ह वै
सावित्रस्याष्टाख्षरं पद श्रियाऽभिषिक्तँव्वेद। श्रिया
हैवाभिषिच्यते। घृणिरिति द्वे अख्षरे। सूर्य इति त्रीणि।
आदित्य इति त्रीणि ।।35।।
10914
एतद्वै सावित्रस्याष्टाख्षरं पद
श्रियाऽभिषिक्तम्। य एवँ व्वेद। श्रिया हैवाभिषिच्यते।
तदेतदृचाऽभ्युक्तम्। ऋचो अख्षरे परमे व्योमन्।
यस्मिन्देवा अधि विश्वे निषेदुः। यस्तन्न वेद किमृचा करिष्यति।
य इत्तद्विदुस्त इमे समासत इति। न ह वा एतस्यर्चा न यजुषा न
साम्नाऽर्थोऽस्ति। यस्सावित्रँव्वेद ।।36।।
10915
ददेतत्परि यद्देव
चक्रम्। आर्द्रं पिन्वमान स्वर्गे लोक ऐति। विजहद्विश्वा
भूतानि संपश्यत्। आर्द्रो ह वै
पिन्वमानस्स्वर्गे लोक एति। विजहन्विश्वा भूतानि
संपश्यन्न्। य एवँव्वेद। शूषो ह वै वार्ष्णेयः। आदित्येन
समाजगाम। तꣳहो वाच। एहि
सावित्रँ व्विद्धि। अयँव्वै स्वर्ग्योऽग्निः
पारयिष्णुरमृताथ्सम्भूत इति। एष वाव स सावित्रः।
य एष तपति। एहि माँव्विद्धि। इति
हैवैनन्तदुवाच।।37।।
10900
द्यतो द्यतो वेदेति तप इति समवादिष्टेति तद्रात्रेर्

ऋतवं एति चकारोवाच नम इत्यादित्य इति त्रीणि
सावित्र व्वेदं विद्धि पञ्चं च ।।9।।
11001
प्रजापतिर्देवान्थ्संज्ञानं प्रस्तुतन्तान्यहान्येष
रात्रयश्चित्र× केतुस्तेऽह्नो मुहूर्ता रात्रैः
पवित्रन्तेऽर्धमासा अग्निष्टोमो यज्ञक्रतवं
इदानीम्मुहूर्तानाञ्जनकोऽहीना देवभागः कैषा वाङ्मा शूषो ह वै
षोर्डश।। इयँ व्वाव सरघा। तस्या अग्निरेव सारघ म्मधु।
याएताः पूर्वपख्षापरपख्षयो रात्रयः। ता मधुकृतः।
यान्यहानि। ते मधुवृषाः। स यो ह वा एता मधुकृतश्च मधुवृषाꣳश्च
वेदं। कुर्वन्ति हास्यैता अग्नौ मधु। नास्येष्टा पूर्तन्धयन्ति। अथ यो
न वेदं ।।38।।
11002
न हास्यैता अग्नौ मधु कुर्वन्ति। धयन्त्यस्येष्टा
पूर्तम्। यो ह वा अहोरात्राणा न्नामधेयानि वेदं।
नाहोरात्रेष्वार्तिमार्भति। संज्ञानँ
व्विज्ञानन्दर् शा दृष्टेति। एतावनुवाकौ
पूर्वपख्षस्याहोरात्राणा
न्नामधेयानि। प्रस्तुतँ व्विष्टुतꣳ सुता
सुन्वतीति। एतावसुवाकावपरपख्षस्याहोरात्राणा न्नामधेयानि।
नाहोरात्रेष्वार्तिमार्छति। य एवँ व्वेदं।।39।।
11003
योह वै मुहूर्ताना न्नामधेयानि वेदं। न मुहूर्तेष्वार्तिमार्छति।
चित्रःकेतुदाता प्रदाता सविता प्रसवित्राऽभिशास्ताऽनुमन्तेति।
एतेऽनुवाका मुहूर्तानान्नामधेयानि। न मुहूर्तेष्वार्तिमार्छति। य
एवँ व्वेदं।यो ह वा अर्थमासावाञ्च मासानाञ्च नामधेयानि वेदं।
वार्धमासेषु न मासेष्वार्तिमार्छति। पवित्रं
पवयिष्यन्थ्सहस्वान्थ्सहीयानरुणोऽरुणरजा इति।
एते।ग़नु वाका अर्थमासानाञ्च मानानाञ्च नामधेयानि।।40।।
11004
नार्धमासेषु न मासेष्वार्तिमाच्र्छति। य एवँ व्वेदं। यो ह वै

य॑ज्ञक्र॒तूना ञ्चर्तूनाञ्च सवथ्सरस्य च नामधेयानि वेद। न यज्ञर्तुषु नर्तुषु॒

न सँव्वथ्स॒र आर्ति॒मार्छति॑। अ॒ग्निष्टोम उ॒क्थ्सोग्निर्

ऋ॒तुःप्र॒जाप॑तिस्सँव्वथ्स॒र इति॑। ए॒तेऽनुवा॒का

य॑ज्ञक्र॒तूना ञ्चर्तूनाञ्च॑ सँव्वथ्स॒र॑स्य च नाम॒धेया॑नि। न

य॑ज्ञक्र॒तुषु॒ नर्तुषु॒ न सँव्वथ्सर आर्ति॒मार्छति। य ए॒वँ व्वेद॑। यो ह॒ वै

मु॑हू॒र्ता॑ना॑ म्मुहू॒र्तान् वेद।न मु॑हू॒र्ता॑ना॑ म्मुहू॒र्तेष्वार्ति॒मार्छति।।41।।

11005

इ॒दानीन्त॒दानी॒मिति॑। ए॒ते वै मु॑हू॒र्ता॑ना॑ म्मुहू॒र्ताः। न मु॑हू॒र्ता॑ना॑

म्मुहू॒र्तेष्वार्ति॒मार्छति। य ए॒वँ व्वेद॑। अथो॒ यथा॑

ख्षेत्र॒ज्ञो भू॒त्वाऽनु॑ प्र॒विश्यान्न॑मत्ति। स

ए॒वमे॒वैतान् ख्षेत्र॒ज्ञो भू॑त्वाऽनु॑

प्र॒विश्यान्न॑मत्ति। स ए॒तेषा॑मे॒वस॑ल॒ोकता॒ँ

सायु॑ज्यमश्नुते। अप॑ पुनर्मृ॒त्युञ्ज॑यति। य ए॒वँ व्वेद ।।42।।

11000

न वेदै॒वँ व्वेदा॑नुवा॒का अर्ध॑मा॒सानाञ्च मासा॑नाञ्च

नाम॒धेया॑नि मुहू॒र्तेष्वार्ति॒मार्छति॒ नव॑च ।।10।।

11101

इ॒यम॑हो॒रा॒त्राणा॒ँ सं॒ज्ञानं॑ पूर्वप॒ख्षस्य॒

प्रस्तु॑तमपरप॒ख्षस्य॑ मुहू॒र्ता॑नाञ्चि॒त्रः के॒तुर॑र्धमा॒साना॑

पु॒नित्रँ॑य्यज्ञक्रतू॒नाम॑ग्निष्टोमो

य॑ज्ञक्रतू॒नामि॒दानी॑ म्मुहू॒र्ता॑ना म्मुहू॒र्तान्

वेदे॒दानी॒मथो॒ द्वादश॑।।

कश्चि॑द्ध वा अ॒स्माँल्लो॒कात्प्रेत्य॑। आ॒त्मानँ॑ व्वेद।

अ॒यम॒हम॒स्मीती॑। कश्चि॒थ्स्वँल्लो॒कन्न प्रति॒ प्रजा॑नाति।

अ॒ग्निर्मु॑ग्धोहै॒व धू॒मता॑न्तः। स्वँल्लो॒कन्न

प्रति॒ प्रजा॑नाति। अथयो है॒वैतम॒ग्निँ सा॑वि॒त्रँ व्वेद॑।

स ए॒वास्माल्लो॒कात्प्रेत्य॑। आ॒त्मानँ॑ व्वेद॑। अ॒यम॒हम॒स्मीति॑।।43।।

11102

स स्वँल्लो॒कं प्रति॒ प्रजा॑नाति। ए॒ष उ॑ वे॒वैन॒ न्तथ्सा॑वि॒त्रः।

स्व॒र्गँल्लो॒कम॒भिव॑हति। अ॒हो॒रा॒त्रैर्वा॒इदँ स॒युग्भिः॑। क्रियते।

इ॒ति॒रा॒त्राया॑दीख्षषत। इ॒ति॒रा॒त्राय॑

व्रतमुपागुरिति। तानिहानेवँ व्विदुषः ।
अमुष्मिँल्लोके शेवधि न्नधयन्ति। अधीतꣳ
हैव स शेवधिमनु परैति। अथ यो हैवैतमग्निꣳ
सावित्रँ व्वेद ।।44।।
11103
तस्यहैवाहोरात्राणि। अमुष्मिँल्लोके शेवधिन्नधयन्ति।
अधीतꣳहैव न शेवधिमनु परैति। भरद्वाजो
हत्रिभिरायुर्भिर्ब्रह्मचर्यमुवास। तꣳ ह
जीर्णि स्थविरꣳ शयानम्। इन्द्र उप प्रज्योवाच।
भरद्वाज। यत्ते चतुर्थमायुर्दद्याम्। किमेनेन कुर्या इति।
ब्रह्मचर्यमेवैनेन चरेयमिति होवाच।।45।।
11104
तꣳह त्रीन्गिरिरूपानविज्ञातानिव दर् शयाञ्चकार।
तेषाहै हैकैकस्मान्मुष्टिनाऽऽददे। स होवाच।
भरद्वाजेत्यामन्त्र्य। वेदा
वा एते। अनन्ता वै वेदाः। एतद्वा
एतैस्त्रिभिरायुर्भिरन्ववोचथाः। अथ त
इतरदननूक्तमेप। एहीमँ विद्धि। अयँव्वै
सर्वविद्येति।।46।।
11105
तस्मैहैतमग्निꣳ सावित्रमुवाच। तꣳस विदित्वा।
अमृतो भूत्वा। स्वर्गँल्लोकमियाय। आदित्यस्य सायुज्यम्। अमृतो
हैवभूत्वा। स्वर्गँल्लोकमेति। आदित्यस्य सायुज्यम्। य
एवँवेद। एषो एव त्रयी विद्या।।47।।
11106
यावन्तꣳ ह वैत्रय्या विद्यया लोक ञ्जयति। तावन्तँल्लोक
ञ्जयति। य एवँ व्वेद। अग्नेर्वा एतानि नामधेयानि।
अग्नेरेव सायुज्यꣳ सलोकतामाप्नोति। य एवँव्वेद। वायोर्वा एतानि
नामधेयानि। वा योरेव सायुज्यꣳ सलोकतामाप्नोति। य एवँव्वेद।
इन्द्रस्य वा एतानि नामधेयानि।।48।।
11107
इन्द्रस्यैव सायुज्यꣳ सलोकतामाप्नोति। य एवँव्वेद।

बृहस्पतेर्वाएतानि नामधेयानि। बृहस्पतेरेव
सायुज्यꣳ सलोकतामाप्नोति। य एवँव्वेद। प्रजापतेर्वा एतानि
नामधेयानि। प्रजापतेरेव सायुज्यꣳ सलोकतामाप्नोति। य
एवँव्वेद। ब्रह्मणो वा एतानि नामधेयानि। ब्रह्मण एव सायुज्यꣳ
सलेकतामाप्तोति। य एव व्वेद। स वा एषोऽग्निरपखक्षपुच्छो वायुरेव।
तस्याग्निर्मुखम्। असावादित्यश्शिरः। स यदेते देवते अन्तरेण।
तथ्सर्वꣳसीव्यति। तस्माथ्सावित्रः ।।49।।
11100
अयमहमस्मीति वेद होवाच सर्वविद्योति विद्योन्द्रस्य
वा एतानि नामधेयानि ब्रह्मण एव सायुज्यꣳ सलोकतामाप्नोति सप्त च।।11।।
10000
अग्नेर्वायेरिन्ध्रस्य बृहस्पते। प्रजापतेर्ब्रह्मणस्स वै सप्त।।
संज्ञानं भूस्त्वमेव सँवथ्सरोऽसि भू राज्ञस्सर्वे विपश्चिते
प्रजापतिर्देवानियँ व्वव सरघा। कश्चिद्धैकादश ।।11।।
संज्ञानꣳ राज्ञी मूर्धा हृदय एष सव्वथ्सरो नार्धमासेषु
नवचत्वारिꣳशति ।।49।। संज्ञानꣳ सावित्रः।। हरिः ओम्।। श्रीकृष्णार्पणमस्तु
दशमप्रपाठकस्समाप्तः

20000

एकादशप्रपाठक प्रारम्भः हरिःओम्।

20101

लोकोऽसि स्वर्गोऽसि। अनन्तोऽस्यपारोऽसि।

अक्षितोस्यक्षय्योसि। तपसः प्रतिष्ठा। त्वयीदमन्तः।

विश्वँय्यक्षँव्विश्वम्भूतँव्विश्वꣳ सुभूतम्। विश्वस्य

भर्ता विश्वन्य जनयिता। तन्त्वोपदधे कामदुघमक्षितम्।

प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ।।1।।

20102

तपोसि लोके श्रितम्। तेजसः प्रतिष्ठा। त्वयीदमन्तः।

विश्वँय्यक्षँव्विश्वम्भूतँविश्वꣳ सुभूतम्। विश्वस्य

भर्तृ विश्वस्य जनयितृ। तत्त्वोपदधे कामदुघमक्षितम्।

प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद।।2।।

20103

तेजोसि तपसि श्रितम्। समुद्रस्य प्रतिष्ठा। त्वयीदमन्तः।

विश्वँय्यक्षँव्विश्वम्भूतव्विश्वꣳऽसुभूतम्।

विश्वस्य भर्तृविश्वस्य जनयितृ। तत्त्वोपदधे कामदुघमक्षितम्।

प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ।।3।।

20104

समूद्रोसि तेयपि श्रितः। अपां प्रतिष्ठा। त्वयीदमन्तः।

विश्वँय्यक्षँव्विश्वꣳ सुभूतम्। विश्वस्य भर्ता विश्वस्य

जनयिता। तन्त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु।

तया देवतयाङ्गिरस्वद्ध्रुवासीद।।4।।

20105

आपस्थ्स समुद्रे श्रिताः। पृथिव्याः प्रतिष्ठा युष्मासु। इदमन्तः।

विश्वँय्युँक्षिव्विश्वम्भूतँविश्वꣳ सुभूतम्। विश्वस्य भत्र्यों विश्वस्य जनयित्र्यः। ता व

उपदधे कामदुघा अक्षिताः। प्रजापतिस्त्वा सादयदु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ।।5।।

20106

पृथिव्यस्यप्सु श्रिता। अग्नेः प्रतिष्ठा। त्वयीदमन्तः। विश्वँय्यक्षँव्विश्वम्भूतँव्विश्वꣳ

सुभूतम्। विश्वस्यभर्त्री विश्वस्य जनयित्री। तान्त्वोपदधे कामदुघामक्षिताम् प्रजापतिस्त्वासादयतु।

तया देवतयाऽङगिरस्वद्ध्रुवा सीद ।।6।।

20107

अग्निरसि पृथिव्याः श्रितः। अन्तरिक्षस्य प्रतिष्ठा। त्वयीदमन्तः।

विश्वँ॑य्य॒ख्षँ॑व्विश्व॑म्भू॒तँ॑व्विश्वः॑ सु॒भू॒तम्। विश्व॑स्य भ॒र्ता विश्वि॑स्य जतयि॒ता।

तन्त्वोप॑दधे काम॒दु॒घ॒मख्षि॑तम्। प्र॒जाप॑तिस्त्वा सादयतु।

तया॑ दे॒वत॑याऽङ्गि॒र॒स्वद्ध्रु॒वा सी॑द।।7।।

20108

अ॒न्तरि॑ख्षमस्य॒ग्नौ श्रि॒तम्। वा॒योःप्रति॒ष्ठा।

त्वयीदम॒न्तः। विश्वँ॑य्य॒ख्षँ॑व्विश्व॑म्भू॒तँ॑व्विश्वः॑

सुभू॒तम्। विश्व॑स्य भर्तृ विश्व॑स्य जनयि॒तृ। त्त्वोप॑दधे काम॒दु॒घ॒मख्षि॑तम्।

प्र॒जाप॑तिस्त्वा सादयतु। तया॑ दे॒वत॑याऽङ्गि॒र॒स्पद्ध्रुवा सी॑द ।।8।।

20109

वा॒युर॑स्य॒न्तरि॑ख्शे श्रि॒तः। दि॒वः प्र॑तिष्ठा। त्वयी॒दम॒न्तः।

विश्वँ॑य्यख्षँ॑व्विश्व॑म्भूतव्विश्वः॑ सुभू॒तम्। विश्व॑स्य भ॒र्ता विश्व॑स्य जनयि॒ता। तन्त्वोप॑दधे

काम॒दु॒घ॒मख्षि॑तम्। प्र॒जाप॑तिस्त्वासादयतु। तया॑ दे॒वतयाऽङ्गि॒र॒स्व॒द्ध्रु॒वा सी॑द ।।9।।

20110

द्यौर॑सि वा॒यौ श्रि॒ता। आ॒दि॒त्यस्य॑ प्रति॒ष्ठा। त्वयी॒दम॒न्तः।

विश्वँ॑य्य॒ख्षँ॑व्विश्व॑म्भू॒तँ॑व्विश्वः॑ सुभू॒तम्। विश्व॑स्य भ॒र्त्री विश्व॑स्य जनयि॒त्री।

तान्त्वोप॑दधे काम॒दु॒घा॒मक्ष॑ताम्। प्र॒जाप॑तिस्त्वा सादयतु। तया॑ दे॒वत॑याऽङ्गि॒र॒स्वद्ध्रु॒वा सी॑द ।।10।।

20111

आ॒दि॒त्यौ॑सि दि॒वि श्रि॒तः। च॒न्द्रम॑सः प्रति॒ष्ठा। त्वयी॒दम॒न्तः। विश्वँ॑य्य॒ख्षँ॑व्विश्व॑मू॒तव्विश्वः॑

सुभू॒तम्। विश्व॑स्य भर्ता विश्व॑स्य जनयि॒ता। तन्त्वोप॑दधे काम॒दु॒घ॒मख्षि॑तम्।

प्र॒जाप॑तिस्त्वा सादयतु। तया॑ दे॒वत॑याऽङ्गि॒र॒स्व द्ध्रु॒वा सी॑द ।।11।।

20112

च॒न्ध्रमा॑ अस्यादि॒त्ये श्रि॒तः। नख्ष॑त्राणां प्रति॒ष्ठा॑। त्वयीदम॒न्तः।

विश्वँ॑य्य॒ख्षँ॑व्विश्व॑म्भू॒तँ॑व्विश्वः॑ सुभू॒तम्। विश्व॑स्य भ॒र्ता विश्व॑स्य जन॒यिता। तन्त्वोप॑दधे

काम॒दु॒घ॒मख्षि॑तम्। प्र॒जाप॑तिस्त्वा सादयतु। तया॑ दे॒वत॑याऽङ्गि॒र॒स्वद्ध्र॒वा सी॑द ।।12।।

20113

नख्ष॑त्राणि स्थ च॒न्द्रम॑सि श्रि॒तानि॑। सँ॒व्व॒थ्स॒रस्य॑ प्रति॒ष्ठा यु॒ष्मासु॑। इ॒दम॒न्तः।

विश्वँ॑य्यख्षँ॑व्विश्व॑म्भूतविश्वः॑ सुभू॒तम्। विश्व॑स्य भ॒र्तृणि॒ विश्व॑स्य जनयि॒तृणि॑। तानि॑ व॒

उप॑दधे काम॒दु॒घा॒न्यख्षि॑तानि। प्र॒जाप॑तिस्त्वा सा॑दयतु। तया॑ दे॒वत॑याऽङ्गि॒र॒स्वद्ध्रुवा सी॑द ।।13।।

20114

सँ॒व्व॒थ्स्रौ॑सि॒नख्ष॑त्रेषु श्रि॒तः। ऋ॒तू॒नां प्र॑तिष्ठा। त्वयी॒दम॒न्तः।

विश्वँ॑य्य॒ख्षँ॑व्विश्व॑म्भा॒तँ॑व्विश्वः॑ सूभू॒तम्। विश्व॑स्य

भ॒र्ता विश्व॑स्य जन॒यिता। तन्त्वोप॑दधे काम॒दु॒घ॒मक्षि॑तम्।

प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ।।14।।
20115
ऋतवस्थ्स सँव्वथ्सरे श्रिताः। मासानां प्रतिष्ठा युष्मासु। इदमन्तः।
विश्वँय्यखँव्विश्वम्भूतँव्विश्वꣳसूभूतम्। विश्वस्य भर्तारो विश्वस्य
जनयितारः। तान् व उपदधे कामदुघानखिंतान्। प्रजापतिस्त्वा
सादयतु। तया देवतयाऽङ्गिरस्पद्ध्रुवा सीद ।।15।।
20116
मासास्थर्तुषु श्रिताः। अर्धमासानां प्रतिष्ठा युष्मासु। इदमन्तः।
विश्वँय्यखँव्विश्वम्भूतँव्विश्वꣳ सुभूतम्। विश्वस्य भर्तारो विश्वस्य
जनयितारः। तान् व उपदधे कामदुघानखिंतान्। प्रजापतिस्त्वासादयतु। तया
देवतयाऽङ्गिरस्वद्ध्रुवासीद ।।16।।
20117
अर्धमासास्थ्समासु श्रिताः। अहोरात्रयोः प्रतिष्ठा युष्मासु। इदन्नतः।
विश्वँय्यखँव्विश्वम्भूतँव्विश्वꣳ सुभूतम्। विश्वस्य भर्तारो विश्वस्य
जनयितारः। तान् व उपदधे कामदुघानखिंतान्। प्रजापतिस्त्वासादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा
सीद ।।17।।
20118
अहोरात्रे स्थोऽर्धमासेषु श्रिते। भूतस्य प्रतिष्ठे भव्यस्य प्रतिष्ठे।
युवयोरिदमन्तः। विश्वँय्यखँव्विश्वम्भूतँव्विश्वꣳ सुभूतम्। विश्वस्य भर्त्र्यौ विश्वस्य जनयित्र्यौ।
ते वामुपदधे कामदु घे अखिंते। प्रजापतिस्त्वा सादयतु। तया
देवतयाऽङ्हिरस्वद्ध्रुवा सीद।।18।।
20119
पौण मास्यष्टका।मावास्या। अन्नादास्थ्साऽन्नदुघो
युष्मासु। इदमन्तः। विश्वँय्यखँ व्विश्वम्भूतँव्विश्वꣳ सुभूतम्। विश्वस्य
भर्त्र्यो विश्वस्य जनयित्र्यः। ता व उपदधे कामदुघा अखिंताः।
प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ।।19।।
20120
राडसि बृहती श्रीरसीन्द्रपत्नी धर्मपत्नी। विश्वम्भूतमनुप्रभूता।
त्वयूदमन्त। विश्वँय्यखँव्विश्वम्भूतँव्विश्वꣳ सुभूतम्। विश्वस्य भर्त्री
विश्वस्य जनयित्री। तान्त्वोपदधे कामदुघामखिंताम्। प्रजापतिस्त्वा
सादयतु। तयादेवतयाऽङ्गिरस्वद्ध्रुवा सीद ।।20।।
20121

ओजो॑सि॒ सहो॑सि। बल॑मसि॒ भ्राजो॑सि। दे॒वाना॒न्धामा॒मृत॑म्। अम॑र्त्यास्तपो॒जाः।
त्वयी॒दम॒न्तः। विश्वँ॑य्यु॒क्षँव्विश्व॑म्भू॒तँव्विश्वꣳ॑सुभू॒तम्।
विश्व॑स्य भ॒र्ता विश्व॑स्य जनयि॒ता। तन्त्वोप॑दधे काम॒दुघ॒मक्षि॑तम्।
प्र॒जाप॑तिस्त्वासादयतु। तया॑ दे॒वत॑या ऽङ्गि॒र॒स्वद्ध्रु॒वा सीद॑ ।।21।।
20100
लो॒कस्तप॒स्तेज॑स्समु॒द्र आप॑ः पृथि॒व्य॑ग्निर॒न्तरि॑क्षँव्वा॒युर्द्ध्यौरा॑दि॒त्यश्च॒न्द्
रमा॒ नक्ष॑त्राणि सँव्वथ्स॒र ऋ॒तवो॒ मासा॑ अर्धम॒ासा अ॑होरा॒त्रे पौर्ण॑म॒ासी
राड॒स्योज॒ोस्येक॑विꣳशतिः ।।1।।
20201
लो॒को॑सि भ॒र्तातम्। तप॒स्तेजो॑सि भ॒र्तातत्। स॒मु॒द्रो॑सि भ॒र्तातम्।
आप॑स्थ्सभ॒र्त्री॑स्ताव॑ः। पृ॒थि॒वी भ॒र्त्री ताम्। आ॒ग्निर॑सि ब॒र्तातम्। अ॒न्तरि॑क्षं
भ॒र्तृतत्। वा॒युर॑सि भ॒र्तातम्। द्यौर॑सि भ॒र्त्रीताम्। आ॒दि॒त्यश्च॒न्द्रमा॑
भ॒र्तातम्। नक्ष॑त्राणिस्थभ॒र्तॄणि॒ तानि॑ वः। सँ॒व्व॒थ्स॒रो॑सि भ॒र्ता तम्। ऋ॒तवो॒
मासा॑ अर्धम॒ासा भ॒र्तारो॑ भ॒र्तारो॑ भ॒र्तार॒स्तान् व॑ः। अ॒हो॒रा॒त्रे भ॒र्त्र्यौ॑ ते
वा॑म्। पौ॒र्ण॒मासी भ॒र्त्री॑स्ता व॑ः। राडसि भ॒र्त्री ताम्। ओजो॑सि भ॒र्तातमेक॑विꣳशतिः।।
त्वम॑ग्ने रु॒द्रो असु॑रो म॒हो दि॒वः। त्वꣳ शर्धो॒ मारु॑तं पृ॒क्ष ई॑शिषे।
त्वँव्वातै॑ररु॒णैर्या॑सि शङ्ग॒यः। त्वं पू॒षा वि॑ध॒तः पा॑सि॒ नु त्मना॑। देवा॑
दे॒वेषु॑ श्रयध्वम्। प्रथ॑मा द्वि॒तीये॑षु श्रयध्वम्। द्विती॑यास्तृ॒तीये॑षु
श्रयध्वम्। तृती॑याश्चतु॒र्थेषु॑ श्रयध्वम्। च॒तु॒र्थाः प॑ञ्च॒मेषु॑
श्रयध्वम्। प॒ञ्च॒माष्ष॒ष्ठेषु॑ श्रयध्वम्।।22।।
20202
ष॒ष्ठास्स॑प्त॒मेषु॑ श्रयध्वम्। स॒प्त॒मा अ॑ष्ट॒मेषु॑ श्रयध्वम्। अ॒ष्ट॒मा न॑व॒मेषु॑
श्रयध्वम्। न॒व॒मा द॑श॒मेषु॑ श्रयध्वम्। द॒श॒मा ए॑काद॒शेषु॑ श्रयध्वम्।
ए॒का॒द॒शा द्वाद॒शेषु॑ श्रयध्वम्। द्वा॒द॒शास्त्र॑योद॒शेषु॑ श्रयध्वम्।
त्र॒यो॒द॒शाश्च॑तुर्द॒शेषु॑ श्रयध्वम्। च॒तु॒र्द॒शाः प॑ञ्चद॒शेषु॑ श्रयध्वम्।
प॒ञ्च॒द॒शाष्षो॑ड॒शेषु॑ श्रयध्वम्।।23।।
20203
षो॒ड॒शास्स॑प्तद॒शेषु॑ श्रयध्वम्। स॒प्तद॒शा अ॑ष्टाद॒शेषु॑
श्रयध्वम्। अ॒ष्टा॒द॒शा ए॑कान्नवि॒ꣳ॒शेषु॑ श्रयध्वम्।
ए॒का॒न्न॒ वि॒ꣳ॒शा वि॒ꣳ॒शेषु॑
श्रयध्वम्। वि॒ꣳ॒शा ए॑कवि॒ꣳ॒शेषु॑ श्रयध्वम्।

एकविंशा द्वाविंशेषु श्रयध्वम्।
द्वाविंशा स्त्रयोविं
शेषु श्रयध्वम्। त्रयोविंशाश्चतुर्विंशेषु
श्रयध्वम्। चतुर्विंशाः पञ्चविंशेषु श्रयध्वम्।
पञ्चविंशेषड्विंशेषु श्रयध्वम्।।24।।
20204
षड्विंशास्सप्त विंशेषु श्रयध्वम्।
सप्तविंशा अष्टाविंशेषु श्रयध्वम्।
अष्टाविंशा एकान्नत्रिंशेषु श्रयध्वम्।
एकान्न त्रिंशा स्त्रिं शेषु श्रयध्वम्। त्रिंशा
एकत्रिं शेषु श्रयध्वम्। एकत्रिंशा
द्वात्रिंशेषु श्रयध्वम्।
द्वात्रिंशास्त्रयस्त्रिंशेषु श्रयध्वम्।
देवास्त्रि रेकादशास्त्रिस्त्रयस्त्रिंशाः। उत्तरे
भवत । उत्तरवर्त्मान उत्तरसत्वानः। यत्काम इदञ्जुहोमि।
तन्मे समृद्ध्यताम्। वय स्याम पतयो रयीणाम्।
भूर्भुवस्स्वस्स्वाहा।।25।।
20200
षष्ठेषु श्रयध्वं षोडशेषु श्रयध्वं षड्विं शेषु
श्रयध्वमुत्तरे भवतोत्तरवर्त्मान उत्तरसत्वानश्चत्वारि च ।।2।।
20301
अग्नाविष्णू सजोषसा। इमा वर्धन्तु वाङ्गिरः। द्युम्नैर्वाजेभिरागतम्। राज्ञी
विराज्ञी। सम्राज्ञी स्वराज्ञी। अर्चिश्शोचिः। तपो हरो भाः। अग्निस्सोमो
बृहस्पतिः। विश्वे देवा भुवनस्य गोपाः। ते सर्वे सङ्गत्य। इदं मे
प्रावता वचः। वय स्याम पतयो रयीणाम्। भूर्भुवस्स्वस्स्वाहा ।।26।।
20300
सङ्गत्य त्रीणि च ।।3।।
20401
अन्नपतेऽन्नस्य नो देहि। अनमीवस्य शुष्मिणः। प्रप्रदातारन्तारिषः।
ऊर्जन्नो धेहि द्विपदे चतुष्पदे। अग्ने पृथिवीपते। सोम वीरुधां
पते। त्वष्टस्समिधां पते। विष्णवाशानां पते। मित्र सत्यानां पते। वरुण धमणां पते।।27।।
20402

म॒रुतो॑ गणानां पतयः। रुद्र॑ पशूनां पते। इन्द्रौ॑जसां पते। बृह॑स्पते ब्रह्मणस्पते। आ रु॒चा रो॑चे॒ऽह स्व॒यम्। रु॒चा रु॑रुचे॒ रोच॑मानः। अ॒तीत्या॒दस्व॑राभ॒रे॒ह।
तस्मि॒न् योनौ॑ प्रज॒नौ प्रजा॑येय। व॒य स्या॑म॒ पत॑यो र॒यी॒णाम्। भूर्भुव॒स्स्व॑स्स्वाहा॑ ।।28।।
20400
वरु॑ण धर्म॑णां पते॒ स्व॑स्स्वाहा॑।।4।।
20501
स॒प्त ते॑ अग्ने स॒मिध॑स्स॒प्त जि॒ह्वाः। स॒प्तर्॒ षय॑प्स॒प्त धाम॑ प्रि॒याणि॑ । स॒प्त होत्रा॑ अनु वि॒द्वान्। स॒प्त योनी॒रा पृण॑स्वा घृ॒तेन॑। प्राची॒ दिक्। अ॒ग्निर्दे॒वता॑। अ॒ग्निः॑ स दि॒शान्दे॒वन्दे॒वता॑नामृच्छतु। यो मै॒तस्यै॑ दि॒शो॑ऽभि॒दास॑ति। द॒क्षि॒णा दिक्। इन्द्रो॑ दे॒वता॑।।29।।
20502
इन्द्र॒ः॑ स दि॒शान्दे॒वन्दे॒वता॑नामृच्छतु। यो मै॒तस्यै॑ दि॒शो॑ऽभि॒दास॑ति। प्र॒तीची॒ दिक्। सोमो॑ दे॒वता॑। सोम॒ः॑ स दि॒शान्दे॒वन्दे॒वता॑नामृच्छतु। यो मै॒तस्यै॑ दि॒शो॑ऽभि॒दास॑ति। उदी॑ची॒ दिक्। मि॒त्रावरु॑णौ दे॒वता॑। मि॒त्रावरु॑णौ॒ स दि॒शान्दे॒वौ दे॒वता॑नामृच्छतु। यो मै॒तस्यै॑ दि॒शो॑ऽभि॒दास॑ति।।30।।
20503
ऊ॒र्ध्वा दिक्। बृ॒ह॒स्पति॑र्दे॒वता॑। बृ॒ह॒स्पति॒ः॑ स दि॒शान्दे॒वन्दे॒वता॑नामृच्छतु। यो मै॒तस्यै॑ दिशो॑ऽभि॒दास॑ति। इ॒यन्दिक्। अदि॑तिर्दे॒वता॑। अदि॑ति॒ः॑ स दि॒शान्दे॒वीन्दे॒वता॑नामृच्छतु। यो मै॒तस्यै॑ दि॒शो॑ऽभि॒दास॑ति। पुरु॑षो॒ दिक्। पुरु॑षो मे॒ काम॒ान्थ्सम॑र्धयतु।।31।।
20504
अ॒न्धोजागृ॑विः प्राण। अस॒ावेहि॑। ब॒धि॒र आ॑क्रन्दयितरपान। अस॒ावेहि॑। उ॒षस॑मुषसमशीय। अ॒हमस॒ो ज्योति॑रशीय। अ॒हमस॒ोऽपो॑ऽशीय। व॒य स्या॑म॒ पत॑यो र॒यी॒णाम्। भूर्भुव॒स्स्व॑स्स्वाहा॑ ।।32।।
20500
द॒क्षि॒णा दिगिन्द्रो॑ दे॒वता॑ मि॒त्रावरु॑णौ॒ स दि॒शान्दे॒वौ दे॒वता॑ नामृच्छतु॒ यो मै॒तस्यै॑ दि॒शो॑ऽभि॒दास॑त्यर्धयतु॒ नव॑ च ।।5।।
20601
यत्ते॒ऽचि॑त॒ँय्यद॑ु चि॒तन्ते॑ अग्ने। यत्त॑ ऊ॒नँय्यद॒ु तेऽति॑रिक्तम्। आ॒दि॒त्यास्तदङ्गि॑रसश्चिन्वन्तु। विश्वे॑ ते दे॒वाश्चिति॒मा पू॑रयन्तु। चि॒तश्चासि॒ सञ्चि॑तश्चास्यग्ने। ए॒ताव॒ाः॑श्चासि॒ भूयाः॑श्चास्यग्ने। लो॒कं पृ॑णच्छि॒द्रं पृ॑ण। अथो॑

सीद शि॒वा त्वम्। इन्द्रा॒ग्नी त्वा॒ बृह॒स्पति॑ः। अ॒स्मिन् योना॑वसीषदन्।।33।।
20602
तया दे॒वत॑याऽङ्गिर॒स्वद्ध्रु॒वा सी॑द। ता अ॑स्य॒ सूद॑दोहसः। सोम॑ श्रीणन्ति॒ पृश्न॑यः।
जन्म॑न्दे॒वाना॒व्विश॑ः। त्रि॒ष्वारो॑च॒ने दि॒वः। तया॑ दे॒वत॑याङ्गिर॒स्वद्ध्रु॒वा
सी॑द। अग्ने॑ दे॒वाꣳ इ॒हा व॑ह। ज॒ज्ञानो वृ॒क्तब॑र्हिषे। असि॒ होता॑ न॒ ईड्य॑ः। अग॑न्म
म॒हा मन॑सा॒ यवि॑ष्ठम्।।34।।
20603
यो दी॒दाय॒ समि॑द्धस्स्वे दु॒रो॒णे। चि॒त्रभा॑नू रोद॑सी अ॒न्तरु॒र्वी।
स्वाहु॑तंव्वि॒श्वत॑ः प्र॒त्यञ्चँ॑म्। मे॒धाकु॒ारंव्वि॒दथ॑स्य प्र॒साध॑नम्। अ॒ग्निꣳ
होता॑रं परि॒भूत॑मं म॒तिम्। त्वामर्भ॑स्य ह॒विष॑स्सम॒ानमित्। त्वां
म॒हो वृ॑णते॒ नरो॒ नान्यन्त्वत्। म॒नु॒ष्वत्त्वा॒ नि धी॑महि। म॒नु॒ष्वथ्समि॑धीमहि।
अग्ने॑ मनु॒षद्द॑ङ्गिरः।।35।।
20604
दे॒वान्दे॑वाय॒ते य॑ज। अ॒ग्निर्ह्हि वा॒जिनं॑व्वि॒शे।
दद॑ाति वि॒श्वच॑र्ष॒णिः। अ॒ग्नी रा॒ये स्वा॒भुवँ॑म्। स
प्री॒तो या॑ति वार्यँ॑म्। इष॑ स्तो॒तृभ्य॒ आ भ॑र। पृ॒ष्टो दि॒वि पृ॒ष्टो अ॒ग्निः
पृ॑थि॒व्याम्। पृ॒ष्टो विश्वा॒ ओष॑धी॒रावि॑वेश। वै॒श्वा॒न॒रस्सह॑सा पृ॒ष्टो
अ॒ग्निः। स न॒ो दिवा॒ स रि॒षः पा॑तु॒ नक्तँ॑म्।।36।।
20600
अ॒सी॒ष॒द॒न् यवि॑ष्ठमङ्गि॒रो नक्तँ॑म्।।6।।
20701
अ॒यँव्वाव यः पव॑ते। सो॑ऽग्निर्ना॑चिके॒तः। स यत् प्राङ्पव॑ते। तद॑स्य॒ शिर॑ः।
अथ॒ यद्द॑क्खि॒णा। स दक्खि॑णः प॒ख्खः । अथ॒ यत्प्र॒त्यक्। तत्पुच्छँ॑म्। यदुद॒ङ्। स
उत्त॑रः प॒ख्खः।।37।।
20702
अथ॒ यथ्सँ॒व्वाति॑। तद॑स्य स॒मञ्च॑नञ्च प्र॒सार॑णञ्च। अथो॑ स॒म्पदे॒वास्य॒ सा। सꣳ ह॒ वा
अ॑स्मै॒ सकाम॑ः पद्यते। यत्का॑मो यज॑ते। यो॑ऽग्निन्ना॑चिके॒त
ञ्चिनु॒ते । य उ॑चैनमे॒वँव्वेद॑। यो ह॒ वा अ॒ग्नेर्ना॑चिके॒त
स्या॒यत॑नं प्रति॒ष्ठाँव्वेद॑। आ॒यत॑नवान्भवति। गच्छ॑ति प्रति॒ष्ठाम्।।38।।
20703
हिर॑ण्यँ॒व्वा अ॒ग्नेर्ना॑चिके॒तस्या॒यत॑नं प्रति॒ष्ठा। य
ए॒वँव्वेद॑।आ॒यतन॑वान्भवति। गच्छ॑ति प्रति॒ष्ठाम्। यो ह॒ वा

अ॒ग्नेर्ना॑चिके॒तस्य॒ शरी॑रँ॒व्वेद॑। सश॑रीर ए॒व

स्व॒र्गँ॑ल्लो॒कमे॑ति। हिर॑ण्यँ॒व्वा

अ॒ग्नेर्ना॑चिके॒तस्य॒ शरी॑रम्। य ए॒वँव्वेद॑। सशरी॑र ए॒व

स्व॒र्गँ॑ल्लो॒कमे॑ति। अथो॒ यथा॑ रु॒क्म उत्त॑प्तो भा॒य्यात्।।39।।

20704

ए॒वमे॒व स तेज॑सा॒ यश॑सा। अ॒स्मिँश्च॑ लो॒केऽमुष्मिँ॑श्च भाति। उ॒रवो॑ ह॒

वै नामै॒ते लो॒काः। येऽव॑रेणादि॒त्यम्।अथ॑ है॒ते वरी॑याꣳसो लो॒काः।

येऽव॑रेणादि॒त्यम्।अन्त॑वन्तꣳ

ह॒ वा ए॒ष ख्ष॒य्यँल्लो॒कञ्ज॑यति।

योऽव॑रेणादि॒त्यम्। अथ॑ है॒षोऽन॒न्तम॑पा॒रम॑ख्ष॒य्यँल्लो॒कञ्ज॑यति। यः

परे॑णादि॒त्यम्।।40।।

20705

अ॒न॒न्तꣳ ह॒ वा अ॑पा॒रम॑ख्ष॒य्यँल्लो॒कञ्ज॑यति।

योँ॑ऽग्निन्ना॑चिके॒तञ्चि॑नु॒ते। य उ॑ चैनमे॒वँव्वेद॑। अथो॒ यथा॒ रथे॒ तिष्ठ॒न्पख्ष॑सी

पर्या॒वर्त॑माने प्र॒त्यपेँ॑ख्षते। ए॒वम॑होरा॒त्रे प्र॒त्यपेँ॑ख्षते। नास्या॑होरा॒त्रे

लो॒कमा॑प्नुतः। योँ॑ऽग्निन्ना॑चिके॒तञ्चि॑नु॒ते। य उ॑ चैनमे॒वँव्वेद॑।।41।।

20700

उत्त॑रः प॒ख्षो गच्छ॑ति प्रति॒ष्ठां भा॒य्याद्यः परे॑णादि॒त्यम॒ष्टौ च॑।।7।।

20801

उ॒शन् ह॒ वैवा॑जश्रव॒सस्स॑र्व वेद॒सन्द॑दौ। तस्य॑ ह॒ नचि॑केता॒ नाम॑ पु॒त्र

आ॑स। तꣳह॑ कुमा॒रꣳ सन्त॑म्। दख्षि॑णासु नी॒यमा॑नासु श्र॒द्धा वि॑वेश। स हो॑वाच।

तत॒ कस्मै॒ मान्दाँ॑स्य॒सीति॑। द्वि॒तीय॑न्तृ॒तीयँ॑म्। तꣳ ह॒ परी॑त उवाच।

मृत्यवेँ॑ त्वा दद॒ामीति॑। तꣳ ह॒ स्मोत्थि॑तँ॒व्वाग॒भिव॑दति।।42।।

20802

गौत॑मकु॒मारमिति॑। स हो॑वाच। परे॑हि मृत्योर्गृ॒हान् । मृत्यवे॒ वै

त्वा॑ऽदा॒मिति॑। तँव्वै प्र॒वस॑न्तङ्ग॒न्ताऽसीति॑ होवाच । तस्य॑ स्म ति॒स्रो

रात्री॒रनाँ॑श्वान्गृहे व॑सतात्। स यदि॑ त्वा पृच्छेत्। कुमा॑र॒ कति॒

रात्री॑रवात्सी॒रिति॑। ति॒स्र इति॒ प्रति॑ ब्रूतात्। किं प्र॑थ॒माꣳ रात्रि॑माश्ना॒ इति॑।।43।।

20803

प्र॒जान्त॒ इति॑। किन्द्वि॒तीया॒मिति॑। प॒शूꣳस्त॒ इति॑।

किन्तृ॒तीया॒मिति॑। सा॒धु॒कृ॒त्यान्त॒ इति॑। तँव्वै

प्र॒वस॑न्तञ्जगाम। तस्य॑ ह ति॒स्रो

रात्रीरनाँश्वान्गृह उवास। तमागत्य पप्रच्छ। कुमार

कति रात्रीरवात्सीरिति। तिस्र इति प्रत्युवाच।।44।।

20804

किं प्रथमाः रात्रिमाश्ना इति।प्रजान्त इति।किन्द्वितीयामिति

पशूःस्त इति। किन्तृतीयामिति।

साधुकृत्यान्त इति। नमस्ते अस्तु भगव इति

होवाच। वरँव्वृणीष्वेति। पितरमेव जीवन्नयानीति।

द्वितीयँव्वृणीष्वेति।।45।।

20805

इष्टापूर्तयोर्मेऽख्षितिं ब्रूहीति होवाच। तस्मै

हैतमग्निन्नाचिकेतमुवाच। ततो वै तस्येष्टापूर्ते नाख्षीयेते।

नास्येष्टापूर्ते ख्षीयेते। योँऽग्निन्नाचिकेतञ्चिनुते। य उचैनमेवव्वेद।

तृतीयँव्वृणीष्वेति। पुनर्मृत्योर्मेऽपजितिं ब्रूहिति होवाच। तस्मै

हैतमग्निन्नाचिकेतमुवाच। ततो वै सोऽप पुनर्मृत्युमजयत्।।।46।।

20806

अप पुनमृत्युञ्जयति। योँऽग्निन्नाचिकेतञ्चिनुते। य उ चैनमेवँव्वेद।

प्रजापतिर्वै प्रजाकामस्तपोऽतप्यत। स हिरण्यमुदास्यत्। तदग्नौ प्रास्यत्।

तदस्मै नाच्छदयत्। तद्वितीयं प्रास्यत्। तदस्मै नैवाच्छदयत्। तत्तृतीयं

प्रास्यत्।।47।।

20807

तदस्मै नैवाच्छदयत्। तदात्मन्नेव हृदय्येँऽग्नौ वैश्वानरे

प्रास्यत्। तदस्मा अच्छदयत्। तस्माद्धिरण्यङ्कनिष्ठन्धनानाम्।

भुञ्जत्प्रियतमम्। हृदयजःहि। सवैतमेव नाविन्दत्। यस्मै

तान्दख्षिणामनेष्यत्। ताः स्वायैव हस्ताय दख्षिणायानयत्। तां प्रत्यगृह्णात्।।48।।

20808

दख्षाय त्वा दख्षिणां प्रतिगृह्णामीति। सोऽदख्षत दख्षिणां प्रतिगृह्य।

दख्षते ह वै दख्षिणां प्रतिगृह्य। य एवँव्वेद।

एतद्धस्म वै तद्विद्वाःसो वाजश्रवसा गोतमाः।

अप्यनूदेश्यान्दख्षिणां प्रतिगृह्णन्ति। उभयेन

वयन्दख्षिष्यामह एव दख्षिणां

प्रतिगृह्येति। तेऽदख्षन्त दख्षिणां प्रतिगृह्य।

दख्षते ह वै दख्षिणां प्रतिगृह्य। य एवँव्वेद। प्रहान्यं ब्लीनाति।।49।।

20800

वदुत्याश्रा इत्युवाच द्वितीयँव्वृणीष्वेत्यजयत्तृतीयं प्रास्यदगृह्णाद्य

एवँव्वेदैकञ्च।।8।।

20901

त ँ हैतमेके पशुबन्ध एवोत्तरवेद्याञ्चिन्वते।

उत्तरवेदिर्सम्मित एषोऽग्निरिति वदन्तः। तन्न तथा कुर्यात्।

एतमग्निङ्कामेन व्यर्द्धयेत्। स एनङ्कामेन व्यृद्धः। कामेन व्यर्द्धयेत्। सौम्ये

वावैनमध्वरे चिन्वीत। यत्र वा भूयिष्ठा आहुतयो हूयेरन्न्।

एतमग्निङ्कामेन समर्द्धयति। सएनङ्कामेन समृद्धः।।50।।

20902

कामेन समर्द्धयति। अथ हैनं पुरर्षयः। उत्तरवेद्यामेव सत्रियमचिन्वत। ततो वै

तेऽविन्दन्त प्रजाम्। अभिस्वर्गँल्लोकमजयन्। विन्दत एव प्रजाम्। अभि

स्वर्गँल्लोकञ्जयति। योऽग्निन्नाचिकेतञ्चिनुते। य उ चैनमेवँव्वेद।

अथ हैनँव्वायुर् ऋद्धिकामः।।51।।

20903

यथान्युप्तमेवोपदधे। ततो वै स एतामृद्धिमार्ध्नोत्।

यामिदँव्वायुर् ऋद्धः। एतामृद्धिमृध्नोति।

यामिदँव्वायुर् ऋद्धः। योऽग्निन्नाचिकेतञ्चिनुते। य उचैनमेवँव्वेद।

अथ हैनङ्गोबलो वार्ष्णः पशुकामः। पाङ्क्तमेव चिक्ये। पञ्च पुरस्तात्।।52।।

20904

पञ्च दक्षिणतः। पञ्च पश्चात्। पञ्चोत्तरतः। एकां मध्ये। ततो वै

स सहस्रं पशून्प्राप्नोत्। प्र सहस्रं

पशूनाप्नोति। योऽग्निन्नाचिकेतञ्चिनुते। य

उ चैनमेवँव्वेद। अथ हैनं प्रजापतिर्ज्यैष्ठ्यकामो यशस्कामः प्रजननकामः।

त्रिवृतमेव चिक्ये।।53।।

20905

सप्त पुरस्तात्। तिस्रो दक्षिणतः। सप्त पश्चात्।

तिस्र उत्तरतः। एकां मध्ये। ततो

वै स प्रयशो ज्यैष्ठ्यमाप्नोत्। एतां प्रजातिं प्राजायत।

यामिदं प्रजाः प्रजायन्ते। त्रिवृद्वै ज्यैष्ठ्यम्। माता पिता पुत्रः।।54।।

20906

त्रिवृत्प्रजननम्। उपस्थो योनिर्मध्यमा। प्र यशो ज्यैष्ठ्यमाप्नोति। एतां

प्रजा॑तिं॒ प्रजा॑यते। यामि॒दं प्र॒जाः प्र॒जाय॑न्ते।
यो॑ऽग्निन्ना॑चिके॒तञ्चि॑नु॒ते। य उ॑
चैनमे॒वँव्वेद॑। अथ॑ हैन॒मिन्द्रो॒ ज्यैष्ठ्य॑कामः। ऊ॒र्ध्वा
ए॒वोप॑दधे। तत॒ो वै स ज्यैष्ठ्य॑मगच्छत्।।55।।
20907
ज्यैष्ठ्य॑ङ्गच्छति। यो॑ऽग्निन्ना॑चिके॒तञ्चि॑नु॒ते। य उ॑
चैनमे॒वँव्वेद॑। अथ॑ हैनम॒सावा॑दि॒त्यस्स्व॒र्गका॑मः।
प्राचीरि॒वोप॑दधे। तत॒ो वै सो॑ऽभि स्व॒र्गँल्लो॒क म॑जयत्। अ॒भि
स्व॒र्गँल्लो॒कञ्ज॑यति। यो॑ऽग्निन्ना॑चिके॒तञ्चि॑नु॒ते।
य उ॑ चैनमे॒वँव्वेद॑। स यदी॒च्छेत्।।56।।
20908
ते॒ज॒स्वी य॑श॒स्वी ब्र॑ह्मवर्च॒सी स्या॒मिति॑। प्राङ्गा होतु॒र्धिष्ण्या॒दुथ्स॑र्पेत्। येयं
प्रागा॒द्यश॑स्वती। सा मा॒ प्रोर्णो॑तु। तेज॑सा॒ यश॑सा ब्रह्मवर्च॒सेनेति॑।
ते॒ज॒स्व्यै॑व य॑श॒स्वी ब्र॑ह्मवर्च॒सी भ॑वति। अथ॒ यदी॒च्छेत्। भूयि॑ष्ठं मे॒ श्रद्ध॑धीरन्।
भूयि॑ष्ठा दक्खि॑णा नयेयु॒रिति॑। दक्खि॑णासु नी॒यमा॑नासु॒ प्राच्येहि॒ प्राच्ये॒हीति॒
प्राची॑ जुषा॒णा वेत्वाज्य॑स्य॒ स्वाहेति॑ स्रु॒वेणो॑प॒हत्या॑हव॒नीये॑ जुहुयात्।।57।।
20909
भूयि॑ष्ठमे॒वास्मै॒ श्रद्ध॑धते। भूयि॑ष्ठा दक्खि॑णा नयन्ति। पुरी॑षमु॒प॒धाय॑।
चि॒ति॒कॢप्तिभि॑रभि॒मृश्य॑। अ॒ग्निं प्र॒णीयो॑पसमा॒धाय॑। चत॑स्र ए॒ता आहु॑तीर्जुहोति।
त्वम॑ग्ने रु॒द्र इति॑ शतरु॒द्रीय॑स्य रूपम्। अग्ना॑ विष्णू॒ इति॑ वसो॒र्धारा॑याः।
अन्न॑पत॒ इत्य॑न्नहोमः। स॒प्त ते॑ अग्ने स॒मिध॑स्स॒प्त जि॒ह्वा इति॑ विश्व॒प्रीः।।58।।
20900
सम॑ृद्ध ऋद्धि॑कामः पु॒रस्ता॑च्चिक्ये पु॒त्रो॑ऽगच्छदि॒च्छे ज्जु॑हुयाद्विश्व॒प्रीः।।9।।
21001
पु॒रर्ष॑यो वा॒युर्गौ॑ब॒लस्स॒हस्रं॑ प्र॒जाप॑तिस्त्रि॒वृदिन्द्रो॒ऽसावा॑दि॒त्यस्स यदी॒च्छेत्।।
यां प्र॑थ॒मामिष्ट॑कामु॒प॒दधा॑ति। इ॒मन्तया॑ लो॒कम॒भि ज॑यति। अथो॒ या
अ॒स्मिँल्लो॒के दे॒वता॑ः। तासा॒ꣳ सायु॑ज्यꣳ सलो॒कता॑मप्नोति।
यान्द्वि॒तीया॑मु॒प॒दधा॑ति। अ॒न्त॒रि॒क्ख॒लो॒कन्तया॒ऽभिज॑यति। अथो॒ या
अ॑न्तरिक्खलो॒के दे॒वता॑ः । तासा॒ꣳ सायु॑ज्यꣳ सलो॒कता॑माप्नोति।
यान्तृ॒तीया॑मु॒प॒दधा॑ति। अ॒मुन्तया॑ लो॒कम॒भिज॑यति।।59।।
21002
अथो॒ या अ॒मुष्मि॑ल्लो॒के दे॒वता॑ः। तासा॒ꣳ

सायुज्यꣳ सलोकतामाप्नोति। अथो या अमूरितरा अष्टादश। य एवामी
उरवश्च वरीयाꣳसश्च लोकाः। तानेव ताभिरभिजयति। कामचारो ह वा
अस्योरुषु च वरीयस्सु च लोकेषु भवति। योऽग्निन्नाचिकेतञ्चिनुते। य
उ चैनमेवँव्वेद। सँव्वथ्सरो वा अग्निर्नाचिकेतः। तस्य वसन्तश्शिरः।।60।।
21003
ग्रीष्मो दख्षिणः पख्षः। वर्षा उत्तरः। शरत्पुच्छम्। मासाः कर्मकाराः।
अहोरात्रे शतरुद्रीयम्। पर्जन्यो वसोर्धारा। यथा वै पर्जन्यस्सुवृष्टं
वृष्ट्वा। प्रजाभ्यस्सर्वान्कामान्थ्संपूरयति। एवमेव स तस्य
सर्वान्कामान्थ्संपूरयति। योऽग्निं नाचिकेतं चिनुते।।61।।
21004
यउ चैनमेवं वेद। संवथ्सरो वा अग्निर्नाचिकेतः। तस्य वसन्तश्शिरः। ग्रीष्मो
दक्षिणः पक्षः। वर्षाः पुच्छम्। शरदुत्तरः पक्षः। हेमन्तो मध्यम्।
पूर्वपक्षाश्चितयः। अपरपक्षाः पुरीषम्। अहोरात्राणीष्टकाः। एष
वाव सोऽग्निरग्निमयः पुनर्णवः। अग्निमयो ह वै पुनर्णवो भूत्वा।
स्वर्गं लोकमेति। आदित्यस्य सायुज्यम्। योऽग्निंनाचिकेतं चिनुते। य उ चैनमेवं वेद।।62।।
21000
अमुं तया लोकमभि जयति शिरश्चिनुत इष्टकाष्षट्च।।10।।
20000
लोकस्त्वमग्नेऽग्ना विष्णू अन्नपते सप्त ते अग्ने
यत्तेऽचितमयं वावोशन् ह वै तꣳ हैतं यां प्रथमामिष्टकां दश।।10।।
लोक आदित्य ओजोऽस्यूर्ध्वा दिगनन्तꣳ ह वै कामेन
ग्रीष्मो द्विषष्टिः।।62।।
हरिःओम्।। ।।श्रीकृष्णार्पणमस्तु।। कृष्णयजुर्ब्राह्मणे तृतीयाष्टके एकादशप्रपाठकस्समाप्तः।

३००००

द्वादश प्रपाठक प्रारंभः हरिः ओम्।।

३०१०१

तुभ्यं॒ ता अ॑ङ्गिरस्तम॒ाश्याम्॒ तं काम॑मग्ने।।

आशा॑नां त्वा॒ विश्वा॒ आशाः॑। अनु॑ नो॒ऽद्यानु॑मति॒रन्विद॑नुमते॒

त्वम्। कामो॑ भू॒तस्य॒ काम॒स्तदग्रे॑। ब्रह्म॑ जज्ञा॒नं पि॒ता

वि॒राजा॑म्। य॒ज्ञो रा॒योऽयं यज्ञः। आपो॑ भ॒द्रा आदित्प॑श्यामि।

तु॑भ्यं भरन्ति॒ यो दे॒ह्यः। पूर्वँ॑ देवा॒ आप॑रेण

प्राणापा॒नौ। ह॒व्य॒वाह॒ꣳ स्वि॑ष्टम्।।१।।

३०१००

तुभ्यं॒ दश॑।।१।।

३०२०१

दे॒वेभ्यो॒ वैस्व॒र्गो॑ल॒ोकस्ति॒रो॑ऽभवत्। ते

प्र॒जाप॑तिमब्रुवन्। प्रजा॑पते स्व॒र्गोवैनो॑

ल॒ोकस्ति॒रो॑ऽभूत्। तमन्वि॒च्छेति॑। तं

य॑ज्ञक्र॒तुभि॒रन्वै॑च्छत्। तं

य॑ज्ञक्र॒तुभि॒र्नान्व॑विन्दत्। तमीष्टि॑भि॒रन्वै॑च्छत्

।तमिष्टि॑भि॒रन्व॑विन्गत्। तदिष्टी॑नामिष्टि॒त्वम्।

एष्ट॑यो ह॒ वै नाम॑। ता इष्ट॑य॒ इत्याच॑क्षते प॒रोक्षे॑ण।

प॒रोक्ष॑प्रिया इव॒ हि दे॒वाः।।२।।

३०२०२

तमाशा॑ऽब्रवीत्। प्रजा॑पत आ॒शया॒ वैश्रा॑म्यसि। अ॒हमु॒ वा आश्मा॑ऽस्मि।

मांस य॑जस्व। अथ॑ ते स॒त्याऽऽशा॑ भविष्यति। अनु॑ स्व॒र्गं ल॒ोकं वे॒थ्स्यसीति॑

स ए॒तम॒ग्नये॒ कामा॑य पु॒रोडाश॑म॒ष्टाक॑पालं॒ निर॑वपत्। आ॒शायै॑ च॒रुम्।

अनु॑मत्यैच॒रुम्। तत॒ो वैतस्य॑ स॒त्याऽऽशाऽभवत्। अनु॑ स्व॒र्गं ल॒ोकम॑विन्दत्।

स॒त्याह॒ वा अ॒स्याशा॑ भवति। अनु॑स्वर्गं ल॒ोकं वि॑न्दति। य ए॒तेन॑ ह॒विषा॒

यज॑ते। य उ॑ चैनदे॒वं वेद॑। स्तोत्र॑ जुहोति। अ॒ग्नये कामा॑य॒स्वाहा॒ऽऽशायै॒

स्वाहा॑। अनु॑मत्यै॒ स्वाहा॑ प्र॒जाप॑तये॒ स्वाहा॑। स्व॒र्गाय॑ ल॒ोकाय॒

स्वाहाऽग्नये॑ स्वि॒ष्टकृ॑ते॒ स्वाहेति॑।।३।।

३०२०३

तं कामोऽब्रवीत्। प्रजापते कामेन
वैश्राम्यसि। अहमु वैकामोऽस्मि। मांनु यजस्व। अथ ते सत्यः कामो
भविष्यति। अनु स्वर्गंलोकं वेथ्स्यसीति। एतमग्नये कामाय
पुरोडाशमष्टाकपालं निरवपत्। कामाय चरुम्। अनुमत्यै चरुम्। ततो वै
तस्य सत्यः कामोऽभवत्। अनु स्वर्गं लोकम विन्दत । सत्यो ह वा अस्य कामो
भवति । अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते।
य उंचैनदेवं वेद। स्तोत्रं जुहोति। अग्नये कामाय स्वाहा कामाय स्वाहा।
अनुमत्यै स्वाहा प्रजापतयो स्वाहा। स्वर्गाय लोकाय स्वाहाऽग्नयें
स्विष्टकृते स्वाहेति।।४।।

३०२०४

तं ब्रह्माब्रवीत्। प्रजापते ब्रह्मणा वैश्राम्यसि।
अहमु वाब्रह्मास्मि। मांनु यजस्व। अथ ते ब्रह्मण्वान् यज्ञो भविष्यति।
अनु स्वर्गं लोकं वेथ्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। ब्रह्मणे चरुम्।
अनुमत्यै चरुम्। ततो वैतस्य ब्रह्मण्वान् यज्ञोऽभवत्। अनु स्वर्गं
लोकमविन्धत्। ब्रह्मण्वान् ह वा अस्य यज्ञो भवति। अनु स्वर्गं लोकं विन्दति। य
एतेन हविषा यजते य उ चैनदेवं वेद। स्तोत्रं जुहोति। अग्नये कामाय
स्वाहा ब्रह्मणे स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय
लोकाय स्वाहाऽग्नयें स्विष्टकृते स्वाहेति।।५।।

३०२०५

तं यज्ञोऽब्रवीत्। प्रजापते यज्ञेनवै श्राम्यसि।
अहमुवै यज्ञोस्मि। मांनु यजस्व। अथ ते सत्योयज्ञो भविष्यति। अनु
स्वर्गं लोकं वेथ्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं
निरवपत्। यज्ञाय चरुम्। अनुमत्यै चरुम्। ततो वैतस्य सत्यो यज्ञो भवत्।
अनुस्वर्गं लोकमविन्दत्। सत्यो ह वा अस्य यज्ञो भवति। अनु स्वर्गं लोकं
विन्दति। य एतेन हविषा यजते। य उंचैनदेवं वेद।स्तोत्रं जुहोति। अग्नये
कामाय स्वाहा यज्ञाय स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा।
स्वर्गाय लोकाय स्वाहाऽग्नयें स्विष्टकृते स्वाहेति।।६।। ।।

३०२०६

वा आपस्स्मः। अस्मान्नु यजस्व। अथ त्वय सर्वे कामाश्श्रयष्यन्ते। अनु
स्वर्गं लोकं वेथ्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं

निर॑वपत्। अ॒ह्व्य॑श्च॒रुम्। अनु॑मत्यै च॒रुम्। तत॒ो वै
तस्मि॒न्थ्सर्वे॒ कामा॑ अश्रयन्त। अनु॑ स्व॒र्गं
लो॒कम॑ विन्दत् ।सर्वै॑ ह॒ वा अ॑स्मिन्कामा॑श्श्रयन्ते ।
अनु॑स्व॒र्गं लो॒कं वि॑न्दति । य ए॒तेन॑ ह॒विषा॒ यज॑ते। य उ॑ चैनदे॒वं वेद॑। सोत्र॑
जुहोति। अ॒ग्नये॒ कामा॑य॒ स्वाहाऽह्व्यस्स्वाहा॑। अनु॑मत्यै स्वाहा॑ प्र॒जाप॑तये॒
स्वाहा॑। स्व॒र्गाय॑ लोकाय स्वाहा॒ऽग्नये॑ स्विष्ट॒कृते॒ स्वाहेति॑।।७।।
३०२०७
तमग्निर्ब॑लि॒मान॑ब्रवीत्। प्रजा॑पते॒ग्नये॒ वै बलि॒मते॒
सर्वा॑णि भू॒तानि॑ब॒लिꣳ व॑रन्ति। अ॒हमु॒ वा
अ॒ग्निर्ब॑लि॒मान॑स्मि।मांनु य॑जस्व।अथ॑ ते॒
सर्वा॑णि भूतानि॑ ब॒लिꣳह॑रिष्यन्ति। अनु॑
स्व॒र्गं लो॒कंवे॒थ्स्यसीति॑। स ए॒तम॒ग्नये कामा॑य
पु॒रो॒डाश॑म॒ष्टाक॑पालं॒ निर॑वपत्। अ॒ग्नये॑ बलि॒मते॑
च॒रुम्। अनु॑मत्यैच॒रुम्।तत॒ो वै तस्मैसर्वा॑णि। भू॒तानि॑
ब॒लिꣳह॑रन्ति। अनु॑ स्व॒र्गं लो॒कं वि॑न्दति। य ए॒तेन॑ ह॒विषा॒ यज॑ते। य
उ॑ चैनदे॒वं वेद॑। सोत्र॑ जुहोति। अ॒ग्नये॒ कामा॑य॒ स्वाहा॒ऽग्नये॑
बलि॒मते॒ स्वाहा॑। अनु॑मत्यै॒स्वाहा॑ प्र॒जाप॑तये॒ स्वाहा॑। स्व॒र्गाय॑
लो॒काय॒स्वाहा॒ऽग्नये॑ स्विष्ट॒कृते॒ स्वाहेति॑।।८।।
३०२०८
तमनु॑वित्तरब्रवीत्।प्रजा॑पते स्व॒र्गंवैलो॒कमनु॑
विविथ्ससि। अ॒हमु॒ वा अनु॑वित्तरस्मि। मां नु यज॑स्व। अथ॑ते
सत्या॒ऽनु॑वित्तिर्भविष्यति। अनु॑स्व॒र्गं लो॒कं
वे॒थ्स्यसीति॑। स ए॒तम॒ग्नये॒
कामा॑य पु॒रो॒डाशम॒ष्टाक॑पालं॒ निर॑वपत्। अनु॑ वित्त्यै च॒रुम्।
अनु॑मत्यैच॒रुम् । तत॒ो वै तस्य॑ स॒त्याऽनु॑ वित्तिरभवत् । अनु॑स्व॒र्गं
लो॒कम॑विन्दत्। स॒त्या ह॒ वा अ॒स्यानु॑वित्तिर्भ॑वति। अनु॑
स्व॒र्गं लो॒कं वि॑न्दति। यए॒तेन॑ ह॒विषा॒ यज॑ते। य उ॑ चैनदे॒वं वेद॑। सोत्र॑
जुहोति।अ॒ग्नये॒ कामा॑य॒स्वाहानु॑ वित्त्यै॒ स्वाहा॑। अनु॑मत्यै॒ स्वाहा॑
प्र॒जाप॑तये॒ स्वाहा स्व॒र्गाय॑ लो॒काय॒ स्वाहा॒ऽग्नये॑ स्विष्ट॒कृते॒ स्वाहेति॑।।९।।
३०२०९

ता वा एतास्सप्तस्वर्गस्य लोकस्य द्वारः।
दिवश्येनयोऽनु वित्तयो नाम। अशा प्रथमाꣳ
रक्षति। कामो द्वितीयाम्। ब्रह्म तृतीयाम्।
यज्ञश्चतुर्थीम्। आपः पञ्चमीम्।
अग्निर्बलिमान्थ्षष्ठीम्। अनुवित्तिस्सप्तमीम्। अनु
ह वै स्वर्गं लोकं विन्दति। कामचार्योऽस्य स्वर्गे लोके भवति। य
एताभिरिष्टिभिर्यजते। य उ चैन एवंवेद। तास्वन्विष्टि। पृष्ठौ हीवरां
दद्यात्कुꣳ सं च। स्त्रियै चाभारꣳ समृद्ध्यै।।१०।। ।।२।।
३०३०१
तपसा देवा देवतामग्र आयन्। तपसर् षयस्स्वरन्वविन्दन्। तपसा
सपत्नान्प्रणुदामारातीः।येनेदं विश्वं परिभूतं यदस्ति। प्रथमजं देवꣳ
हविषा विधेम। स्वयंभुब्रह्म परमं तपो यत्। स एव पुत्रस्सपिता
समाता। तपोमा यक्षं प्रथमꣳ संबभूव । श्रद्धया देवोदेवत्वमश्नुते।
श्रद्धा प्रतिष्ठा लोकस्य देवी।।११।।
३०३०२
सानो जुषाणोप यज्ञमागात्। कामवथ्साऽमृतं दुहाना। श्रद्धा देवी प्रथमजा
ऋतस्य। विश्वस्य भर्त्री जगतः प्रतिष्ठा। ताꣳ श्रद्धाꣳ हविषा यजामहे। सा नो
लोकममृतं दधातु । ईशाना देवी भुवनस्याधिपत्नी । आगाध्सत्यꣳ
हविरिदं जुषाणम्। यस्माद्देवा जज्ञिरे भुवनंचविश्वे। तस्मै विधेम हविषा
घृतेन।।१२।।
३०३०३
यथा देवैस्सधमादं मदेम। यस्य प्रतिष्ठोर्वन्तरिक्षम्।
तस्माद्देवा जज्ञिरे भुवनंच सर्वे। तथ्सत्यमर्चदुपयज्ञंन आगात्।
ब्रह्माहुतीरुपमोदमानम्।मनसो वशे सर्वमिदं बभूव। नान्यस्य मनो
वशमन्वियाय। भीष्मो हि देवस्सहसस्सहीयान्। सनो जुषाण उप
यज्ञमागात्। आकूतीनामधिपतिं चेतसांच ।।१३।।
३०३०४
संकल्पजूतिं देवं विपश्चम्। मनो राजानमिह वर्धयन्तः।
उपहवेऽस्य सुमतौ स्याम। चरणं पवित्रं विततं पुराणम्। येन पूतस्तरति
दुष्कृतानि। तेन पवित्रेणशुद्धेन पूताः। अति पाप्मावमरातिं तरेम। लोकस्य

द्वार॑मर्चि॒मत्प॒वित्र॑म्। ज्योतिष्म॒द्भ्राज॑मानं॒ मह॑स्वत्। अ॒मृत॑स्य॒ धारा॑ बहु॒धा दो ह॑मानम्। चर॑णं नो लो॒केसुधि॑तां दधातु। अ॒ग्निर्मू॒र्धा भुव॑ः। अनु॑ नो॒ ऽद्यानु॑मति॒रन्विद॑नुमते॒ त्वम्। ह॒व्य॒वाह॒ꣳ स्वि॑ष्टम्।।१४।।

३०३००

दे॒वी घृ॒तेन॒ चेत॑सां च॒ दोह॑मानं च॒त्वारि॑ च।।३।।

३०४०१

दे॒वेभ्यो वैस्व॒र्गो लो॒कस्तिरो॑ऽभवत्। ते प्र॒जाप॑तिमब्रुवन्। प्रजा॑पते स्व॒र्गो वै नो॑ लो॒कस्ति॒रो॑ऽभूत्। तमन्वि॒च्छेति॑। तं य॑ज्ञक्र॒तुभि॒रन्वै॑च्छत्। तं य॑क्ज्ञक्र॒तुभि॒र्नान्व॑विन्दत् । तमिष्टि॑भि॒रन्वै॑स्छत् । तमिष्टि॑भि॒रन्व॑विन्द् त्। तमिष्टी॑नामिष्टि॒त्वम्। एष्ट॑योह॒वै नाम॑। ता इष्ट॑य॒ इत्याच॑क्षते प॒रोक्षे॑ण। प॒रोक्ष॑प्रिया इव॒ हि दे॒वाः।।१५।।

३०४०२

तं तपो॑ब्रवीत्। प्रजा॑पते॒ त॑पसा॒ वै श्रा॑म्यसि। अ॒हमु॒वैतपो॑स्मि। मांनु य॑जस्व। अथ॑ ते स॒त्यं तपो॑ भविष्यति। अनु॑ स्व॒र्गं लो॒कं वे॒थ्स्यसीति॑। स ए॒तमा॑ग्नेयम॒ष्टाक॑पालं॒ निर॑वपत्। तप॑से च॒रुम्। अनु॑मत्यै च॒रुम्। तत॒ो वै तस्य॑ स॒त्यं तपो॑ऽभवत्। अनु॑स्व॒र्गं लो॒कम॑विन्दत्। स॒त्यꣳ ह॒ वा अ॑स्य॒ तपो॑ भवति। अनु॑स्व॒र्गं लो॒कं वि॑न्दति। य॒ ए॒ तेन॑ ह॒विषा॒ यज॑ते। य उ॑ चैनदे॒वं वेद॑। सोत्र॑ जुहोति। अ॒ग्नये॒ स्वाह॒ा तप॑से॒ स्वाहा॑। अनु॑मत्यै॒ स्वाहा॑ प्र॒जाप॑तये॒ स्वाहा॑। स्व॒र्गाय॑ लो॒काय॒ स्वाह॒ाऽग्नये॑ स्वि॒ष्टकृ॒ते॒ स्वाहेति॑।।१६।।

३०४०३

तꣳ श्र॒द्धाऽब्र॑वीत्। प्रजा॑पते श्र॒द्धया॒ वे॒ श्रा॑म्यसि। अ॒हमु॒ वै श्र॒द्धास्मि॑। मांनु य॑जस्व। अथ॑ ते स॒त्या श्र॒द्धा भ॑विष्यति। अनु॑स्व॒र्गं लो॒कं वे॒थ्स्यसीति॑। स ए॒तमा॑ग्नेयम॒ष्टाक॑पालं॒ निर॑वपत्। श्र॒द्धायै॑च॒रुम्। अनु॑मत्यैच॒रुम्। तत॒ो वै तस्य॑ स॒त्याश्र॒द्धाऽभ॑वत्। अनु॑ स्व॒र्गं लो॒कम॑विन्दत्। स॒त्या ह॒वा अ॑स्यश्र॒द्धा भ॑वति। अनु॑ स्व॒र्गं लो॒कंवि॑न्दति। य ए॒ते॑न ह॒विषा॒ य॑जते। य उ॑ चैनदे॒वं वेद॑। सोत्र॑ जुहोति। अ॒ग्नये॒ स्वाहा॑ श्र॒द्धायै स्वाहा॑। अनु॑मत्यै॒ स्वाहा॑ प्र॒जाप॑तये॒ स्वाहा॑। स्व॒र्गाय॑ लो॒काय स्वाह॒ाऽग्नये॑ स्वि॒ष्टकृ॒ते॒ स्वाहेति॑।।१७।।

३०४०४

तꣳ स॒त्यम॑ब्रवीत्। प्रजा॑पते स॒त्येन॒ वै श्रा॑म्यसि। अ॒हमु॒ वै

सत्यमस्मि। मांनु यजस्व। अथ ते सत्यः सत्यंभविष्यति। अनु स्वर्गं
लोकं वेथ्स्यसीति। स एतमाग्नेयमष्टाकपालन्निरवपत्। सत्याय चरुम्।
अनुमत्यै चरुम्। ततो वै तस्य सत्यः सत्यमबवत्। अनु स्वर्गँल्लोकमविन्दत्।
सत्यः ह वा अस्य सत्यं भवति । अनु स्वर्गल्लोकँव्विंतन्दति ।
य एतेन हविषा यजते। य उ चैनदेवँव्वेद। सोत्र जुहोति। अग्नये स्वाहा
सत्याय स्वाहा।अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय
स्वाहाऽग्नये स्विष्टकृते स्वाहेति।।१८।।
३०४०५
तं मनोब्रवीत्। प्रजापतेमनसा वै श्राम्यसि। अहमु वै मनोस्मि। मान्नु यजस्व। अथते
सत्यं मनो भविष्यति। अनु स्वर्गँल्लोकँव्वेथ्स्यसीति। स
एतमाग्नेयमष्टाकपालन्निरवपत्। मनसे च्रुम्।
अनुमत्यैचरुम्। ततो वै तस्य सत्यं मनोऽभवत्। अनु स्वर्गँल्लोकमविन्दत्।
सत्यः ह वा अस्य मनोभवत्। अनु स्वर्गँल्लोकंव्विन्दत्। य एतेन हविषा यजते। य
उचैनदेवँव्वेद। सोत्र जुहोति। अग्नये स्वाहा मनसे स्वाहा। अनुमत्यै
स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते
स्वाहेति।।१९।।
३०४०६
तच्चरणमब्रवीत्। प्रजापते चरणेन वैश्राम्यसि। अहमु वै चरणमस्मि।
मान्नु यजस्व। अथ ते सत्यञ्चरणं भविष्यति। अनु
स्वर्गँल्लोकँव्वेथ्स्यसीति। स एतमाग्नेयमष्टाकपालन्निरवपत्। चरणाय चरुम्।
अनुमत्यै चरुम्। ततो वै तस्य सत्यञ्चरणमभवत्। अनु स्वर्गँल्लोकमविन्दत्।
सत्यः ह वा अस्य चरणं भवति। अनु स्वर्गँल्लोकँव्विन्दति। य एतेन
हविषा यजते। य उ चैनदेवँव्वेद। सोत्र जुहोति। अग्नये स्वाहा चरणाय
स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय
स्वाहाऽग्नये स्विष्टकृते स्वाहेति।।२०।।
३०४०७
ता वा एताः पञ्च स्वर्गस्य लोकस्य द्वारः। अपाघा अनुवित्तयो
नाम। तपः प्रथमाः रख्षति। श्रद्धाद्वितीयाम्।
सत्यन्तृतीयाम्।मनश्चतुर्थीम्। चरणं पञ्चमीम्। अनु
ह वै स्वर्गँल्लोकँव्विन्दति। कामचारोस्यस्वर्गे लोके

भवति। य एताभिरिष्टिभिर्यजते।
य उ चैना एवँव्वेद। तास्वन्विष्टि। पष्ठौही वरा
न्धद्यात्कुँसञ्च। स्त्रियैचाभारः समृद्ध्यै।।२१।। ।।४।।
३०५०१
ब्रह्मवै चतुर् होतारः। चतुर् होतृभ्योऽधियज्ञो निर्मितः। नैनँ शप्तम्।
नाभिचरितमागच्छति। य एवँव्वेद। यो ह वै चतुर् होतृणाञ्चतुर्
होतृत्वँव्वेद। अथो पञ्चहोतृत्वम्। सर्वा हास्मैदिशः कल्पन्ते। वाचस्पतिर्
होता दशहोतृणाम्। पृथिवी होता चतुर् होतृणाम्।।२२।।
३०५०२
अग्निर् होता पञ्चहोतृणाम्। वाग्घोता षड्ढोतृणाम्। महाहविर्
होता सप्तहोतृणाम्। एतद्वै चतुर् होतृणाञ्चतुर् होतृत्वम्।
अथोपञ्चहोतृत्वम्। सर्वाहास्मै दिशः कल्पन्ते। य एवँव्वेद। एषा वै
सर्वविद्या। एतद्भेषजम्। एषा पङ्क्तिकस्स्वर्गस्यलोकस्याञ्जसायनिस्स्रुति।।२३।।
३०५०३
एतान् योऽध्यैत्यच्छदिर्दर्शे यावत्तरसम्। स्वरेति। अनपब्रवस्सर्वमायुरेति।
विन्दते प्रजाम्। रायस्पोषङ्गौपत्यम्। ब्रह्मवर्चसी भवति। एतान् यो
ऽध्यैतिस्पृणोत्यात्मानम् । प्रजां पितॄन् ।एतान् वा अरुणऔववेशिर्विदाञ्चकार।।२४।।
३०५०४
एतैरधिवादमपाजयत्। अथो विश्वं पाप्मानम्।
स्वर्ययौ। एतान् योऽध्यैति। अधिवादञ्जयति। अथ
विश्वं पाप्मानाम्। स्वरेति।
एतैरग्निञ्चिन्वीत स्वर्गकामः। एतैरायुष्कामः।
प्रजापशुकामो वा ।।२५।।
३०५०५
पुरस्ताद्दशहोतारमुदञ्चमुपदधाति यावत्पदम्। हृदयँय्यजुषी वल्यौ
च। दक्षिणतः प्राञ्चंचतुर् होतारम्। पश्चादुदञ्चं पञ्चहोतारम्।
उत्तरतः प्राञ्चँ षड्ढोतारम्। उपरिष्टात्प्राञ्चँ सप्तहोतारम्।
हृदयँय्यजूँषि पत्यंश्च। यथाऽवकाशंग्रहान्। यथाऽवकाशं
प्रतिग्रहाँल्लोकंपृणाश्च। सर्वा हास्यैता देवताः प्रीता अभीष्टा भवन्ति।।२६।।
३०५०६

सदेवमग्निश्चिनुते। रथसंमितश्चेतव्यः। वज्रो वै रथः। वज्रेणैव पाप्मानं
भ्रातृव्यꣳ स्तृणुते। पख्खस्संमितश्चेतव्यः। एतावान् वै रथः। यावत्पख्खः।
रथसंमितमेव चिनुते। इममेव लोकं पशुबन्देवाभिजयति। अथो अग्निष्टोमेन।।२७।।
३०५०७
अन्तरिख्षमुक्थ्येन। स्वरतिरात्रेण। सर्वाँल्लोकानहीनेन। अथो
सत्त्रेण। वरो दख्षिणा वरेणैव वरꣳ स्पृणोति। आत्मा हि वरः। एकविꣳशतिर्दख्षिणा
ददाति। एकविꣳशोवा इतस्स्वर्गोलोकः। प्रस्वर्गँल्लोकमाप्नोति।।२८।।
३०५०८
असावादित्य एकविꣳशः। अमुमेवादित्यमाप्नोति। शतन्ददातिश्रतायुः पुरुषश्श
तेन्द्रियःआयुष्येवेन्द्रिये प्रतितिष्ठति। सहस्रं न्ददाति। सहस्रं सँमिवस्स्वर्गो
लोकः। स्वर्गस्यलोकस्याभिजित्यै। अन्विष्टक न्दख्षिणा ददाति। सर्वाणि वयाꣳसि।।२९।।
३०५०९
सर्वस्याप्त्यै। सर्वस्यावरुध्यै। यदि न विन्देत। मन्थानेतावतो
दद्यादोदनान् वा। अश्नुते तङ्कामम्। यस्मै कामायाग्निश्चीयते। पष्ठौही
न्त्वन्तर्वतीन्दद्यात् । सा हि सर्वणिवयाꣳसि । सर्वस्यापै सर्वस्यावरुध्यै।।३०।।
३०५१०
हिरण्यन्ददाति। हिरण्यज्योतिरेव सर्गँल्लोकमेति। वासो ददाति। तेनायुः प्रतिरते।
वेदितृतीये यजेत। त्रिष्यत्या हि देवाः। ससत्यमग्निश्चिनुते। तदेतत्पशुबन्धे
ब्राह्मणं ब्रूयत्। नेतरेषु यज्ञषु। यो ह वै चतुर् होतॄननुसवनन्तर्पयितव्यान् वेद।।३१।।
३०५११
तृप्यति प्रजया पशुभिः। उपैनꣳ सोमपीथो नमति। एते वै चतुर्
होतारोऽनुवनन्तर्पयितव्याः। ये ब्राह्मणा बहुविदः। तेभ्यो यद्दख्षिणा न नयेत्।
दुरिष्टꣳ स्यात्। अग्निरस्य वृञ्जीरन्। तेभ्यो यथाश्रद्धन्दद्यात्।
स्विष्टमेवैतत्क्रियते। नास्याग्निर्व्वृञ्जते।।३२।।
३०५१२
हिरण्येष्टको भवति। यावदुत्तममङ्गुलिकाण्डँय्यज्ञपरुषा संमितम्।
तेजो हिरण्यम्। यदि हिरण्यन्न विन्देत्। शर्करा अक्ता उपदध्यात्। तेजो
घृतम्। सतेजसमेवाग्निश्चिनुते। अग्निश्चित्वा सौत्रा मण्यायजेत मैत्रा
वरुण्या वा वीर्येण वा एष व्यृद्ध्यते। योऽग्निश्चिनुते।।३३।।
३०५१३

यावद्देन वीर्यम्। तदस्मिन्धदाति। ब्रह्मणस्सायज्यः
सलोकतामाप्नोति। एतासामेव देवतानाः सायुज्यम्। सार्ष्टिताः समान
लोकतामास्नोति। य एतमग्निञ्चिनुते।य उचैनमेवँव्वेद। एतदेव
सावित्रे ब्राह्मणम्। अथो नाचिकेते।।३४।।
३०५००
होता चतुर् होतॄणाः स्तुतिश्चकार वा भवन्त्यग्निष्टोमेवाप्नोति वयाःसि
वयाःसि सर्वस्याप्त्यै सर्वस्यावरुध्यै वेद वृञ्जते चिनुते नव च।।५।।
३०६०१
यञ्चामृतँय्यञ्च मर्त्यम्। यञ्च प्राणिति यञ्चन। सर्वास्ता इष्टकाः कृत्वा।
उपकामदुघा दधे। तेनर् षिणा तेन ब्रह्मणा। तया देव
तयाऽङ्गिरस्वद्ध्रुवा सीद। सर्वास्स्त्रियस्सर्वान्पुःसः। सर्व न्न
स्त्रीपुमञ्च यत्। सर्वास्ताः। यावन्तः पाःसवो भूमेः।।३५।।
३०६०२
सङ्ख्याता देवमायया। सर्वास्ताः। यावन्ता उषाः पशूनाम्। पृथिव्यां
पुष्टिर् हिताः। सर्वास्ताः। यावतीस्सिकतास्सर्वाः। अप्स्वन्तश्च
याश्श्रिताः। सर्वास्ताः। यावतीश्शर्करा धृत्यै। अस्यांपृथिव्यामधि।।३६।।
३०६०३
सर्वास्ताः। यावन्तोश्मानोऽस्यां पृथिव्याम्। प्रतिष्ठासु प्रतिष्ठिताः। सर्वास्ताः।
यावतीर्वीरुधस्सर्वाः। विष्ठिताः पृथिवीमनु। सर्वास्ताः। यावतीरोषधीस्सर्वाः। विष्ठिताः
पृथिवीमनु। सर्वास्ताः।।३७।।
३०६०४
यावन्तो वनस्पतयः। अस्यां पृथिव्यामधि। सर्वस्ताः। यावन्तो
ग्राम्याः पशवस्सर्वे। अरण्याश्च ये। सर्वास्ताः। ये द्विपादश्चतुष्पादः।
अपाद उदरसर्पिणः। सर्वास्ताः। यावदाञ्जनमुच्यते।।३८।।
३०६०५
देवत्रा यच्च मानुषम्। सर्वास्ताः। या वत्कृष्णायसः सर्वम्। देवत्रा यच्च मानुषम्।
सर्वास्ताः। यावल्लोहायसः सर्वम् । देवत्रा यच्च मानुषम्
।सर्वास्ताः। सर्वः सीसः सर्वन्त्रपु। देवत्रायच्च मानुषम् ।।३९।।
३०६०६
सर्वास्ताः। सर्वः हिरण्यः रजतम्। देवत्रा यच्च मानुषम्। सर्वास्ताः। सर्व

सुवर्णं॑ हरि॑तम्। दे॒व॒त्रा यच्च॑ मानु॒षम्। सर्वा॒स्ता इष्ट॑काःकृ॒त्वा। उप॑ काम॒दुघा॑ दधे।
तेनर्‌ षि॑णा॒ तेन॒ ब्रह्म॑णा। तया॑ दे॒वत॑याऽङ्गिर॒स्वद्ध्रु॒वा सी॑द।।४०।।
३०६००
भूमे॒रधि॒ विष्ठि॑ताः पृथि॒वीमनु॒सर्वा॒स्ता उ॒च्यते॑ मानु॒षं॑ सी॑द।।६।।
यच्च॒ स्त्रिय॑ः पां॒सव॒ ऊषा॒स्सिक॑ता॒श्शर्क॑रा॒ अश्मा॑नो वी॒रुध
ओष॑धी॒र्वन॒स्पत॑यो ग्राम्या ये द्विपादो याव॒दाञ्ज॑नँ॒य्याव॑त्कृ॒ष्णाय॑सं॑
ल्लोहाय॑सं॒ सीसं॒ हिर॑ण्यं॒ सुव॑र्णं॒ हरि॑तम॒ष्टाद॑श।।
३०७०१
सर्वा॒ दिशो॑ दि॒ख्षु।
यच्चा॒न्तर्भू॑तं प्रति॑ष्ठितम्। सर्व॒स्ता इष्ट॑काः कृ॒त्वा। उप॑ काम॒दुघा॑ दधे।
तेनर्‌ षि॑णा॒ तेन॒ ब्रह्म॑णा। तया॑ दे॒वत॑याऽग्गिर॒स्वद्ध्रु॒वा सी॑द। अन्तरि॑ख्षञ्च॒
केव॑लम्। यच्चा॒स्मिन्न॑न्त॒राहि॑तम्। सर्वँ॒स्ताः। अ॒न्त॒रिख्ष्य॑श्च॒ याः॑ प्र॒जाः।।४१।।
३०७०२
ग॒न्ध॒र्वा॒फ्स॒रस॑श्च॒ये। सर्व॒स्ताः। सर्वा॑नुदा॒रान् थ्स॒लिलान्॑। अ॒न्तरि॑ख्षे॒
प्रति॑ष्ठितान्। सर्व॒स्ताः। सर्वा॑नुदा॒रान् थ्स॑लि॒लान्। स्था॒व॒राः प्रोष्या॑श्च॒ ये।
सर्वा॒स्ताः। सर्वा॒न्धुनिं॒ सर्वा॑न्ध्वं॒सान्। हिमो यच्च॑ शी॒यते॑।।४२।।
३०७०३
सर्वा॒स्ताः। सर्वा॒न्मरी॑ची॒न् वित॑तान्। नी॒हारो यच्च॑ शी॒यते॑। सईवा॒स्ताः।
सर्वा॑वि॒द्यु॒त॒स्सर्वा॑न् थ्सनयि॒त्नून्। ह्रा॒दुनी॒र्यच्च॑शी॒यते॑। सर्वा॒स्ताः।
सर्वा॒स्स्र॒वन्तीस्स॒रित॑ः। सर्व॑मप्सु॒च॒रञ्च॒यत्। सर्वा॒स्ताः।।४३।।
३०७०४
याश्च॒ कूप्या॒ याश्च॑ ना॒द्या॑स्समु॒द्रिया॑ः। याश्च॑ वैश॒न्तीरु॒त
प्रा॑स॒चीर्याः। सर्वा॒स्ताः। ये चो॒त्तिष्ठ॑न्ति जी॒मूता॑ः। याश्चवर्‌ ष॑न्ति वृ॒ष्टय॑ः।
सर्वा॒स्ताः। तप॒स्तेज॑ आका॒शम्। यच्चा॑का॒शे प्रति॑ष्ठितम्। सर्वा॒स्ताः। वा॒युवँ॑व्वया॑सि॒ सर्वा॑णि।।४४।।
३०७०५
अ॒न्त॒रि॒ख्ष॒च॒रञ्च॒यत्। सईवा॒स्ताः। अ॒ग्निं॑ सूर्य॑ञ्च॒न्द्रम्। मि॒त्रँ॑व्वरु॑णं॒
भग॑म्। सर्वा॒स्ताः। स॒त्यं॒ श्र॒द्धान्तपो॒ दम॑म्। नाम॑ रू॒पञ्च॑ भू॒ताना॑म्।
सर्वा॒स्ता इष्ट॑काः कृ॒त्वा। उप॑ काम॒दुघा॑ दधे। तेनर्‌ षि॑णा॒ तेन॒ ब्रह्म॑णा।
तया॑ दे॒वत॑याऽङ्गिर॒स्वद्ध्रु॒वा सी॑द।।४५।।
३०७००

प्र॒जा हि॒मो यच्च॑ शी॒यते॒ सर्वा॒स्तास्सर्वा॑णि॒ ब्रह्म॒णैक॑ञ्च।।७।।

३०८०१

दिशो॒ऽन्तरि॑क्ष मान्तरि॒क्ष्य॑ उदारानु॒दारान्धुवि॒ म्मरी॑चीन्

वि॒द्युत॒स्स्रव॑न्ती॒र्याश्च॒ये च॒तपौ॑वा॒युम॒ग्निꣳ स॒त्यं पञ्च॑दश।।

सर्वा॒न्दिव॒ꣳ सर्वा॑न्धे॒वान्दि॒वि। यच्चा॒न्तर्भू॒तं प्रति॑ष्ठितम्। सर्वा॒स्ता इष्ट॑काः

कृ॒त्वा । उप॑ काम॒दुघा॑ दधे। तेनर् षि॑णा॒ तेन॒ ब्रह्म॑णा। तया॑

दे॒वत॑याऽङ्गि॒र॒स्वद्ध्रु॒वा सी॑द। याव॑ती॒स्तार॑का॒स्सर्वाः॑। वित॑ता रोच॒ने दि॒वि।

सर्वा॒स्ताः। ऋचो॒ यजूꣳ॑षि॒ सामा॑नि।।४६।।

३०८०२

अ॒थर्वा॒ङ्गि॒रन॑श्च॒ये। सर्वा॒स्ताः। इ॒ति॒हा॒स॒पु॒राण॑ञ्च। स॒र्प॒दे॒व॒ज॒नाश्च॒ये।

सर्वा॒स्ताः। ये च॑ल॒ोकाये चा॑ल॒ोकाः।अ॒न्तर्भू॒तं प्रति॑ष्ठितम्। सर्वा॒स्ताः यच्च॒ ब्रह्म॒

यच्चा॑ब्र॒ह्म। अ॒न्तब्र॒ह्मन्प्रति॑ष्ठितम्।।४७।।

३०८०३

सर्वा॒स्ताः। अ॒हो॒रा॒त्राणि॒ सर्वा॑णि। अ॒र्ध॒मा॒साꣳश्च॒

केव॑लान्। सर्वा॒स्ताः। सर्वा॑ नृ॒तून् थ्सर्वा॑न्मा॒सान्।

सँ॒व्व॒थ्स॒रञ्च केव॑लम्। सर्वा॒स्ताः। सर्वं॒ भू॒तꣳ सर्वं॒ भव्य॑म्।

यच्चातो॒ऽधि॑ भवि॒ष्यति॑। सर्वा॒स्ता इष्ट॑काः कृ॒त्वा। उप॑ काम॒दुघा॑ दधे। तेनर् षि॑णा॒ तेन॒

ब्रह्म॑णा। तया॑ दे॒वत॑याऽङ्गि॒र॒स्वद्ध्रु॒वा सी॑द।।४८।।

३०८००

सामा॑नि ब्र॒ह्मन्प्रति॑ष्ठितङ्कृ॒त्वा त्रीणि॑।।८।।

३०९०१

दिव॒न्तार॑का॒ ऋच॑ इतिहासपु॒राण॒ञ्च ये च॒ यच्चा॑हो॒रा॒त्राण्यृ॒तून्भू॒त॒न्नव॑।। ऋ॒चां प्राची॑ मह॒ती

दिगु॑च्यते। दक्षि॑णामाहु॒र्यजु॑षामपा॒राम् । अध॑कर्व॒णामज्गि॑रसां

प्र॒तीची॑ । सम्ना॒मुदी॑सै मह॒ती दिगु॑च्यते। ऋ॒ग्भिः पू॒र्वा॒ह्णे दि॒वि दे॒व ई॑यते। यु॒जु॒र्वे॒दे

ति॑ष्ठति॒ मध्ये॒ अह्नः॑। सा॒म॒वे॒देना॑स्तम॒ये मही॑यते।

वेदै॒रशू॑न्यस्त्रि॒भिरे॑ति॒। सूर्यः॑। ऋ॒ग्भ्यो जा॒ताꣳ

सर्व॒शो मू॒र्ति॑माहुः। सर्वा॒ गति॑र्याजु॒षी है॒व शश्व॑त्।।४९।।

३०९०२

सर्व॒न्तेज॑सामरू॒प्यꣳ ह॑ शश्वत्। सर्वꣳ॑ हे॒दं ब्रह्म॑णा हैव सृ॒ष्टम्।

ऋ॒ग्भ्यो जा॒तँव्वैश्यँ॒व्वर्ण॑माहुः। य॒जु॒र्वे॒दज्क्ष॑त्रि॒यस्या॑हु॒र्योनि॑म्। सा॒म॒वे॒दो

ब्रा॒ह्म॒णाना॒ं प्रसू॑तिः। पूर्वे॒ पूर्वे॑भ्यो॒ वच॑ ए॒तदू॑चुः। आ॒दु॒र् शम॒मग्निर्ञ्चन्वा॒नाः ।
पूर्वे॑ विश्व॒सृजो॒ऽमृता॑ः। श॒तँव्व॒र् षसह॒स्राणि॑। दी॒क्षि॒तास्स॒त्रमा॑सत।।५०।।
३०९०३
तप॑ असीद्गृहप॑तिः। ब्रह्म॑ ब्र॒ह्माभ॑वथ्स्व॒यम्। स॒त्यꣳह॒ होतै॑षा॒मासी॑त्।
यद्वि॑श्व॒सृज॒ आस॑त। अ॒मृत॑मेभ्य॒ उद॑गायत्। स॒हस्र॑ं परिवथ्स॒रान्। भू॒तꣳ ह॑
प्रस्तो॒तैषा॒मासी॑त्। भ॒वि॒ष्यत्प्रति॑ चाहरत्। प्रा॒णो
अ॑ध्व॒र्युर॑भवत्। इ॒दꣳ सर्व॒ꣳ सिषा॑सताम्।।५१।।
३०९०४
अ॒सा॒नो वि॒द्वाना॒वृ॑तः। प्रति प्राति॑ष्ठदध्व॒रे। आ॒र्त॒वा उ॑पगा॒तार॑ः। स॒दु॒स्या॑ऋतवो॑ऽवन्।
अ॒र्ध॒मा॒साश्च॒मासा॑श्च। च॒म॒सा॒ध्व॒र्य॒वोऽभ॑वन् । अश॑ꣳस॒द्ब्रह्म॑ण॒स्तेजः ।
अ॒च्छा॒वा॒कोऽभ॑व॒द्यशः॑ ऋ॒तमे॑षां प्रश॒ास्ताऽऽसी॑त्। यद्वि॑श्व॒सृज॒ आस॑त।।५२।।
३०९०५
ऊ॒र्ग्राजा॑न॒ मुद॑वहत्। ध्रु॒वगो॒पस्सहो॑ऽभवत्। ओज॒ोभ्य॑ष्टौद्ग्राव् ण्णः॑।
जदयद्वि॑श्व॒सृज॒ आस॑त। अप॑चितिः। पो॒त्रीया॑मयजत्। ने॒ष्ट्रीया॑मयज॒त्त्विषि॑ः।
अग्नी॑द्ध्राद्विदिषी स॒त्त्वम्। श्र॒द्धा है॒वाय॑जथ्स्व॒यम्। इ॒रा पत्नी॑ विश्व॒सृजा॑म्।
आकू॑तीरपिनद्धविः।।५३।।
३०९०६
इ॒ध्मꣳ ह॒ क्षुच्चै॑भ्य उ॒ग्रे। तृ॒ष्णा चाव॑हतामु॒भे। वागे॑षाꣳ सुब्र॒ह्मण्याऽऽसी॑त्। छ॒न्दो॒यो॒गान्
वि॑जान॒ती। क॒ल्प॒ त॒न्त्राणि॑ तन्वा॒नाऽह॑ः। स॒ꣳस्थाश्च॑ सर्व॒शः। अ॒हो॒रा॒त्रे
प॑शुपा॒त्यौ। मु॒हु॒र्ताः प्रे॒ष्या॑ अभवन्। मृ॒त्युस्तद॑भवद्धाता। श॒मि॒तोग्रोवि॒शां पति॑ः।।५४।।
३०९०७
वि॒श्व॒सृज॑ः प्रथमास्स॒त्रमा॑सत। स॒हस्र॑सम॒ं प्रसु॑ते न॒ यन्त॑ः।
तता॑ह जज्ञे॒ भुव॑नस्य गो॒पाः। हि॒र॒ण्मय॑श्शकु॒नि॒र्ब्रह्म॒नाम॑। येन॒
सूर्य॒स्तप॑ति॒ तेज॑से॒द्धः। पि॒ता पु॒त्रेण॑ पितृ॒मान् योनि॑योनौ। नावे॑दविन्मनु॒ते तं
बृ॒हन्त॑म्। स॒र्वा॒नु॒भु॒मा॒त्मान॑ꣳ संपरा॒ये। ए॒ष नि॒त्यो म॑हि॒मा
ब्रा॒ह्म॒णस्य॑। न कर्म॑णा वर्धते॒ नो कनीयान्।।५५।।
३०९०८
तस्यै॒वात्मा पद॒ वित्तँवि॑दित्वा। न कर्म॑णा लिप्यते॒
पाप॑केन। पञ्च॑पञ्च॒शत॑स्त्रि॒वृत॑स्सँव्वध्स॒राः ।
पञ्च॑पञ्चा॒शत॑ः। पञ्च॑द॒शाः। पञ्च॑ प॒ञ्चाशत॑स्सप्तद॒शाः। पञ्च॑

पञ्चाशत एकवि॒ꣳशाः। वि॒श्व॒सृजाः स॒हस्रसँव्वथ्सरम्। ए॒तेन॒ वै विश्व॒सृज
इ॒दँव्विश्वमसृजन्त। यद्विश्व॒मसृजन्त। तस्माद्विश्व॒सृजः। विश्वमेन॒ानन॒ु
प्रजायते। ब्रह्मण॒स्सायुज्यꣳ सल॒ोकताँय्यन्ति। ए॒तासामे॒व दे॒वताना॒ꣳ
सायुज्यम्। सा॒र्ष्टिताꣳ समानल॒ोकताँय्यन्ति। य ए॒तदुप॒यन्ति। ये
चैन॒त्प्राहुः। येभ्यश्चैन॒त्प्राहुः। ओम्।।५६।।
३०९००
शश्वदासत॒ सिषासत॒ामासत ह॒विष्पति॒ः कनीया॒न्तस्माद्विश्व॒सृजो॒ऽष्टौ च।।९।।
३००००
तुभ्यन्दे॒वेभ्य॒स्तपसा दे॒वेभ्यो॒ ब्रह्मवै चतुर् होता॒रो यज्ञामृत॒ꣳ सर्वा॒
दिशो दि॒ख्षु सर्वा॒न्दिवमृ॒चां प्राची॒ नव ।।९।। तुभ्य॒न्तपसा॒ ता वा ए॒ताः पञ्च॒हिरण्यन्धदाति॒ सर्वा॒
दिश॒ स्तप आसीद्गृ॒हपति॒ष्षट्पञ्चाशत्।।५६।। तुभ्य॒मोम्।।
हरिः ओम्।। ।।श्रीकृष्णार्पणमस्तु।। कृष्णयजुर्ब्राह्मणे तृतीयाष्टके द्वादश प्रपाठकस्समाप्तः
कृष्णयजुर्ब्राह्मणञ्च संपूर्णम्